# अश्ववैद्यकम् ।

# TREATISE ON THE VETERINARY SCIENCE.



## महासामन्त श्रीजयदत्तकृतम् ।

तथा

## अश्वचिकित्सितम् ।

श्रीनकुलकृतम् ।

पण्डितकुलपतिना बि, ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च ।



द्वितीयसंस्करणम् ।

कलिकातानगर्य्याम्

सिद्धेश्वरयन्त्रे

मुद्रितः ।



खृं १८९२ ।

# अथ अश्ववैद्यकस्य सूचीपत्त्रम् ।


| | | |
|---|---|---|
| **उद्देशाध्यायः प्रथमः** | | [ १—२ पृष्ठा ] |
| | | श्लोकसंख्या । |
| मङ्गलाचरणम् | ... | १ |
| ग्रन्थकारप्रतिज्ञा | ... | २ |
| ग्रन्थकर्त्तुः परिचयः | ... | ४ |
| अध्यायसंख्यानिर्देशः | ... | ५ |
| श्लोकसंख्यानिर्देशः | ... | ५ |
| ग्रन्थप्रतिपाद्यकथनम् | ... | ६ |
| **प्रदेशाध्यायो द्वितीयः** | | [ २ पृ०-५ पृ० ] |
| जिह्वादिसर्वप्रदेशकथनम् | ... | ३ |
| **सर्वलक्षणाध्यायः तृतीयः** | | [ ५ पृ-२१ पृ० ] |
| यत्र प्रदेशे यल्लक्षणं शुभं तत्कथनम् | | ( ३-८ श्लोक ) |
| अङ्गशुभलक्षणानि | ... | १० |
| शुभावर्त्तकथनम् | ... | २९. |
| अशुभावर्त्तकथनम् | ... | ४७ |
| शुभपुण्ड्रककथनम् | ... | ७३ |
| अशुभपुण्ड्रककथनम् | ... | ७९ |
| स्थानविशेषेषु शुभाशुभपुष्पकथनम् | ... | ८२ |
| गतिकथनम् | ... | ९३ |
| वर्णकथनम् | ... | ९८ |
| कोकाहादिलक्षणम् | ... | १०० |
| क्रयाहलक्षणम् | ... | १०१ |
| सेराहलक्षणम् | ... | १०१ |
| सुरूहकलक्षणम् | ... | १०१ |
| नीलकलक्षणम् | ... | १०२ |
| त्रियूहलक्षणम् | ... | १०२ |
| खिलाहलक्षणम् | ... | १०२ |
| हलाहखङ्गाहकुलाहलक्षणानि | ... | १०३ |
| उराहलक्षणम् | ... | १०४ |
| वोरुहानलक्षणम् | ... | १०५ |
| उकनाहलक्षणम् | ... | १०६ |
| पुण्ड्रकविशेषेण कोकाहादीनां संज्ञान्तरकथनम् | ... | १०७-११० |
| वाजिदेहगतवर्णानां शुभाशुभलक्षणकथनम् | ... | १११-१२४ |
| अष्टमङ्गललक्षणम् | ... | ११३ |

श्लोकसंख्या ।

| | | | |
|---|---|---|---|
| मल्लिकाचलक्षणम् | ... | ... | ११५ |
| पञ्चभद्रलक्षणम् | ... | ... | १२०-१२१ |
| स्वरकथनम् | ... | .. | १२५ |
| महादोषकथनम् | ... | ... | १३५ |
| काकुदीलक्षणम् | ... | ... | १४० |
| करालीलक्षणम् | ... | ... | १४१ |
| हीनदन्तलक्षणम् | ... | ... | १४१ |
| अधिकदन्तलक्षणम् | ... | ... | १४२-१४५ |
| एकाण्डलक्षणम् | ... | ... | १४६ |
| जाताण्डलक्षणम् | ... | ... | १४६ |
| कञ्चुकिलक्षणम् | ... | ... | १४७ |
| मार्जारपादलक्षणम् | ... | ... | १४८ |
| विसरिलक्षणम् | ... | ... | १४९ |
| हिखुरिलक्षणम् | ... | ... | १५० |
| सञ्जातव्रषणलक्षणम् | ... | ... | १५१ |
| स्तनिलक्षणम् | ... | ... | १५१ |
| विकर्णिलक्षणम् | ... | ... | १५२ |
| व्याघ्रवर्णलक्षणम् | ... | .. | १५२ |
| वामनयमजलक्षणम् | ... | ... | १५३ |
| मुषलिलक्षणम् | ... | ... | १५४ |
| इन्द्रवज्रलक्षणम् | ... | . | १५५ |
| एतद्दोषयुक्तघोटकरक्षणात् सुरथादेरशुभकथनम् | | ... | १५८ |
| उत्पातकथनम् | ... | ... | १६० |
| छायाकथनम् | ... | ... | १७१ |
| सत्वकथनम् | ... | ... | १८० |
| प्रमाणकथनम् | ... | .. | १८२ |

## आयुर्वयोज्ञानाध्यायः चतुर्थः [ २१ पृ०—२४ पृ० ]

| | | | |
|---|---|---|---|
| दीर्घायुर्लक्षणकथनम् | ... | ... | १ |
| स्वल्पायुर्लक्षणकथनम् | ... | ... | १२ |
| दन्तैर्वयोज्ञानकथनम् | ... | ... | १८ |
| कालिकादिरेखया वयोज्ञानम् | | ... | २० |
| पतितापतितोत्थदन्तलक्षणम् | ... | ... | २९ |

## दशाचिन्ताध्यायः पञ्चमः [ २४ पृ०-२५ पृ० ]

| | | | |
|---|---|---|---|
| दशविधदशाकथनम् | ... | ... | १ |

श्लोकसंख्या।

| | | |
|---|---|---|
| दशापरिमाणकथनम् | ... ... | २ |
| दशासेवकथनम् | ... ... | ३ |
| **जन्मदेशाध्यायः षष्ठः** | | **[ २५पृ०-२६पृ० ]** |
| उत्तमाश्वसंख्या | ... ... | २ |
| मध्यमाश्वसंख्यादि | ... .. | ३ |
| अधमाश्वसंख्या | ... ... | ४ |
| उत्तमताजिकाश्वलक्षणम् | ... ... | ५ |
| उत्तमपारसीकाश्वलक्षणम् | ... ... | ८ |
| मध्यमकेकाणाश्वलक्षणम् | ... ... | ९ |
| मध्यमतुरुष्काश्वलक्षणम् | ... ... | ११ |
| मध्यमभाङ्गजाश्वलक्षणम् | ... ... | १२ |
| सैन्धवाद्यश्वलक्षणम् | ... ... | १३ |
| **वाहनविधानाध्यायः सप्तमः** | | **[ २७ पृ०-३३ पृ० ]** |
| विप्रादितद्वाहनविवरणम् | ... ... | १ |
| विप्रादिजातिलक्षणम् | ... .. | ४ |
| विप्रादिवशीकरणम् | ... .. | ६ |
| सत्वशक्तितद्वाहनविवरणम् | ... ... | ८ |
| रङ्गभूमिविवरणम् | ... .. | ११ |
| दोषगुणताड़नविवरणम् | .. ... | १३ |
| धारागतिविवरणम् | . ... | २४ |
| वल्गादिविवरणम् | . ... | ३० |
| आदिवाहने तिथिनक्षत्रादिकथनम् | ... | ३७ |
| खुरादिविवरणम् | ... ... | ५६ |
| सादिकार्य्यविवरणम् | ... ... | ६२ |
| **वन्ध्योपचाराध्यायोऽष्टमः** | | **[ ३३ पृ०-३४ पृ० ]** |
| वन्ध्याया गर्भधारणे उपचारविवरणम् | ... | ७ |
| **गर्भज्ञानाध्यायो नवमः** | | **[ ३४ पृ०-३५ पृ० ]** |
| सगर्भालक्षणकथनम् | ... ... | १ |
| गर्भप्रथमादिमासलक्षणकथनम् | ... | ८ |
| **सूतिकोपचाराध्यायो दशमः** | | **[ ३५ पृ०—३७ पृ० ]** |
| प्रसूतायामुपचारकथनम् | ... ... | १ |
| क्षीरशोधनम् | ... ... | १२ |
| किशोरोपचारप्रकरणम् | ... ... | १८ |

श्लोकसंख्या ।

द्रव्यमात्राज्ञानाध्याय एकादशः [ ३७ पृ० — ४१ पृ० ]
मानपरिभाषाकथनम् ... ... २
शुष्कादिद्रव्यमात्राकथनम् ... ... ५
भोजने यवादिमात्राकथनम् ... ... ९
नस्यधूपकर्णपूरणादिमात्राकथनम् ... २४
आनूपादिपशुमांसगुणकथनम् ... ... ३१
निघण्ट्वध्यायो द्वादशः [ ४१ पृ० — ४७ पृ० ]
द्रव्याणां पर्य्यायकथनम् ... ... १७७
ऋतुविभागाध्यायः त्रयोदशः [ ४८ पृ० — ५५ पृ० ]
सर्व्वर्त्तूपचारे ऋतुविभागविवरणम् ... १
शालानिर्म्माणविवरणम् ... ... ४
वर्षापोषणविवरणम् ... ... १५
शरत्पोषणविवरणम् ... ... २६
हेमन्तपोषणविवरणम् ... ... ३३
शिशिरपोषणविधिः ... ... ६५
वसन्तपोषणविधिः ... ... ७५
ग्रीष्मपोषणविधिः ... ... ८२
सर्व्वर्त्तुपोषणविधिः ... ... ८४
क्षाराग्निशस्त्रविधानाध्यायः चतुर्दशः [ ५५ पृ० — ५७ पृ० ]
क्षारदाहविधानम् ... ... २
लौहदाहविधानम् ... ... ७
मेदोदाहविधानम् ... ... १३
दाहलक्षणम् ... २०
शस्त्रविधानम् ... ... २९
शिराविधाध्यायः पञ्चदशः [ ५७ पृ० — ६० पृ० ]
शिरावेधकालनिरूपणम् ... ... १
शोणितविवरणम् ... ... ६
वेधस्थानकथनम् ... ... १२
निरूहानुवासनाध्यायः षोड़शः [ ६१ पृ० — ६३ पृ० ]
नेत्रनिर्म्माणविवरणम् ... ... १
अनुवासनविवरणम् ... ... ६
निरूहविवरणम् ... ... १४
नस्याध्यायः सप्तदशः [ ६३ पृ० — ६४ पृ० ]
नस्यविधिः ... ... १

| | | श्लोक संख्या । |
|---|---|---|
| वातादिरोगेषु विविधस्वेदकथनम् | ... | ६ |
| **स्वेदविधानाध्यायः अष्टादशः** | | [ ६४ पृ०—६५ पृ० ] |
| पुटस्वेदकथनम् ... | ... | १ |
| अङ्गारस्वेदकथनम् ... | ... | २ |
| तुषस्वेदकथनम् ... | ... | ५ |
| कफादौ स्वेदकथनम् ... | ... | ६ |
| यत्र स्वेदनिषेधस्तत्कथनम् .. | ... | ८ |
| **स्नेहप्रयोगाध्यायः एकोनविंशः** | | [ ६५ पृ० —६७ पृ० ] |
| घृतपानकालकथनम् ... | ... | १ |
| तैलपानकथनम् ... | ... | २ |
| घृतादिपाननियमकथनम् .. | ... | ५ |
| सम्यक्स्निग्धगुणकथनम् ... | ... | ८ |
| अतिस्निग्धलक्षणं तत्प्रतीकारश्च ... | ... | ९ |
| अतिस्निग्धस्य भोजनविधिः .. | ... | १२ |
| **तैलविधानाध्यायः विंशः** | | [ ६७ पृ०—६८ पृ० ] |
| मधुकादितैलम् .. | ... | १ |
| तिल्वकसर्पिः ... | ... | ३ |
| प्रसारणीतैलम् ... | ... | ५ |
| **घृतविधानाध्यायः एकविंशः** | | [ ६८ पृ०—६९ पृ० ] |
| पञ्चतिक्तघृतम् . | ... | १ |
| करञ्जाद्यं घृतम् ... | ... | २ |
| द्वितीयं पञ्चतिक्तं घृतम् . | ... | ५ |
| **श्रान्तोपचाराध्यायः द्वाविंशः** | | [ ६९ पृ०—७० पृ० ] |
| श्रान्तोपचारकथनम् .. | ... | १ |
| **स्वस्थारिष्टाध्यायः त्रयोविंशः** | | [ ७० पृ०—७२ पृ० ] |
| भोजनारिष्टकथनम् . | ... | २ |
| छायाद्यरिष्टकथनम् .. | ... | ३ |
| दर्शनेन्द्रियारिष्टकथनम् ... | ... | १० |
| श्रवणेन्द्रियारिष्टकथनम् ... | ... | ११ |
| रसनेन्द्रियारिष्टकथनम् ... | ... | १६ |
| **वेधारिष्टाध्यायः चतुर्विंशः** | | [ ७२ पृ०—७४ पृ० ] |
| वेधारिष्टनिदानलक्षणम् ... | ... | ४ |
| वेधाख्योपसर्गलक्षणम् ... | ... | ४ |
| वेधारिष्ट चिकित्सा ... | ... | १४ |

श्लोकै संख्या।

**कीटारिष्टाध्यायः पञ्चविंशः** [ ७४ पृ०—७५ पृ० ]

कीटनिदानलक्षणे ... ... १
तच्चिकित्सा ... ... ४

**मृगरोगाध्यायः षड्विंशः** ७५ पृ०

मृगरोगलक्षणम् ... ... १
तच्चिकित्सा ... ... ४

**वातादिकोपाध्यायः सप्तविंशः** ७६ पृ०

प्रकोपनिदानलक्षणे ... ... १
वातादिप्रकोपकालकथनम् ... ... ४

**व्याधिनिर्देशाध्यायः अष्टाविंशः** [ ७६ पृ०—७७ पृ० ]

मुखरोगादिलक्षणनिर्देशः ... ... (१—७) श्लो०

**मुखरोगाध्यायः एकोनत्रिंशः** [ ७७ पृ०—८० पृ० ]

मुखरोगनिर्वाचनम् ... ... (१—२) श्लो०
मुखरोगनिदानलक्षणे ... ... ४
मुखरोगचिकित्सा ... ... १९

**अक्षिरोगाध्यायः त्रिंशः** [ ८० पृ०—८७ पृ० ]

अक्षिरोगनिर्वाचनम् ... ... (१—३) श्लो०
वातिकाक्षिरोगनिदानलक्षणानि ... ५
तच्चिकित्सा ... ... ९
पैत्तिकाक्षिरोगलक्षणानि ... ... २१
तच्चिकित्सितम् ... ... २४
प्रचारलक्षणचिकित्सितम् ... ... ३१
काचलक्षणचिकित्से ... ... ३७
रक्तजाक्षिरोगलक्षणानि ... ... ४४
तच्चिकित्सा ... ... ४७
पटललक्षणम् ... ... ५४
तच्चिकित्सा ... ... ५८
मुञ्जजालचिकित्सा ... ... ६७
वर्त्मकुन्दचिकित्सा ... ... ८०

**शिरोरोगचिकित्साध्यायः एकत्रिंशः** [ ८७ पृ०—९० पृ० ]

वातिकशिरोरोगलक्षणम् ... ... १
तच्चिकित्सा ... ... ४
पैत्तिकशिरोरोगलक्षणम् ... ... ७
तच्चिकित्सा ... ... ९

श्लोकसंख्या ।

श्लैष्मिकशिरोरोगचिकित्सा ... ... १३
सान्निपातिकशिरोरोगचिकित्सा ... १८
रक्ताभिघातशिरोरोगचिकित्सा ... २३

**लङ्घितरोगाध्यायः द्वात्रिंशः** [ ९० पृ०—९३ पृ० ]
लङ्घितलक्षणम् ... ... १
तच्चिकित्सा ... ... ४

**कर्णरोगाध्यायः त्रयस्त्रिंशः** ९३ पृ०
कर्णरोगनिदानचिकित्सिते ... ... १

**कासरोगाध्यायः चतुस्त्रिंशः** [ ९४ पृ०—९६ पृ० ]
कासरोगनिदानलक्षणानि ... ... १
वातकासचिकित्सा ... ... ९
पित्तकासचिकित्सा ... ... १७
श्लेष्मकासचिकित्सा ... ... २४

**हिक्काश्वासाध्यायः पञ्चत्रिंशः** [ ९६ पृ०—९७ पृ० ]
हिक्काश्वासनिदानलक्षणम् ... ... १
हिक्काश्वासचिकित्सा ... ... ५

**व्रणरोगाध्यायः षट्त्रिंशः** [ पृ० ९८—९९ पृ० ]
व्रणनिदानलक्षणानि ... ... १
व्रणचिकित्सा ... ... (८२३) श्लो०

**सिङ्घानरोगाध्यायः सप्तत्रिंशः** [ १०० पृ०—१०२ पृ० ]
वातादिसिङ्घानलक्षणानि ... ... १
तच्चिकित्सा ... ... ४
पैत्तिकद्वन्द्वजसिङ्घानकचिकित्सा ... ... १४

**घृणिरोगाध्यायः अष्टत्रिंशः** [ १०२ पृ०—१०३ पृ० ]
घृणिरोगलक्षणम् ... ... १
घृणिचिकित्सा ... ... २

**पादरोगाध्यायः एकोनचत्वारिंशः** [ १०३ पृ०—१०६ पृ० ]
पादरोगसञ्ज्ञा ... ... १
पादरोगलक्षणानि ... ... ६
एषां चिकित्सा ... ... २३

**ज्वररोगाध्यायः चत्वारिंशः** [ १०६ पृ०—१०९ पृ० ]
वातज्वरनिदानलक्षणानि ... ... १
वातज्वरचिकित्सा ... ... ४
पित्तज्वरलक्षणम् ... ... ८

श्लोकसंख्या ।

पित्तज्वरचिकित्सा ... ... ९
श्लेष्मज्वरनिदानम् ... ... १८
तच्चिकित्सा ... ... २०
सन्निपातज्वरलक्षणचिकित्सा: ... ... २४
अभिघातज्वरलक्षणचिकित्सा: ... ... २५

अजीर्णरोगाध्याय: एकचत्वारिंश: [ १०९ पृ०—११० पृ० ]
अजीर्णलक्षणम् ... ... १
तच्चिकित्सा ... ... ३

अतीसाराध्याय: द्विचत्वारिंश: [ ११० पृ०—१११ पृ० ]
वाताद्यतीसारलक्षणचिकित्सितम् ... १
पित्तातिसारचिकित्सा ... ... १२
श्लेष्मातिसारचिकित्सा ... ... १५
आमसन्निपातद्वन्द्वजातिसारचिकित्सा ... १८

शूलरोगाध्याय: त्रिचत्वारिंश: [ ११२ पृ०—११३ पृ० ]
पञ्चविधशूलनिदानलक्षणानि ... ... १
सौभिचविबन्धचिकित्सा ... ... ७

उदावर्त्तरोगाध्याय: चतुश्चत्वारिंश: [ ११३ पृ०—११४ पृ० ]
उदावर्त्तलक्षणचिकित्सितम् ... ... १

प्रस्कन्नरोगाध्याय: पञ्चचत्वारिंश: [ ११४ पृ०—११५ पृ० ]
प्रस्कन्नरोगलक्षणचिकित्सितम् ... ... १

क्रिमिकोष्ठाध्याय: षट्चत्वारिंश: [ ११५ पृ०—११६ पृ० ]
क्रिमिकोष्ठनिदानचिकित्सितम् ... ... १
श्लेष्मकोष्ठनिदानचिकित्सिते ... ... १७

मूत्रग्रहरोगाध्याय: सप्तचत्वारिंश: [ ११६ पृ०—११८ पृ० ]
वातादिमूत्रग्रहलक्षणानि ... ... १
वातमूत्रग्रहचिकित्सा ... ... ५
पित्तमूत्रग्रहचिकित्सा ... ... ९
श्लेष्ममूत्रग्रहचिकित्सा ... ... १३

कुष्ठरोगाध्याय: अष्टचत्वारिंश: [ ११८ पृ०—११९ पृ० ]
कुष्ठरोगलक्षणचिकित्सितम् ... ... १

शोथरोगाध्याय: एकोनपञ्चाशत्तम: [ ११९ पृ०—१२१ पृ० ]
वातादिशोथलक्षणम् ... ... १
वातशोथसाधारणचिकित्सा ... ... ६
वातशोथचिकित्सा ... ... १०

श्लोकसंख्या।

पित्तशोथचिकित्सा ... ... १४
श्लेष्मशोथचिकित्सा ... ... १७

मुष्करोगाध्यायः पञ्चाशत्तमः [ १२१ पृ०—१२५ पृ० ]
वाताण्डलक्षणचिकित्सितम् ... ... १
पित्ताण्डलक्षणचिकित्सितम् ... ... १२
श्लेष्माण्डलक्षणचिकित्सितम् ... ... १७
पीताण्डलक्षणचिकित्सितम् ... ... २३
रक्ताण्डलक्षणचिकित्सितम् ... ... ३५

शीतीतरोगाध्यायः एकपञ्चाशत्तमः [ १२५ पृ०—१२६ पृ० ]
शीतीतरोगलक्षणम् ... ... १
तच्चिकित्सा ... ... ५

उदररोगाध्यायः द्विपञ्चाशत्तमः [ १२६ पृ०—१२८ पृ० ]
अष्टविधोदरनामलक्षणानि ... ... १
वातोदरचिकित्सा ... ... १२
पित्तोदरचिकित्सा ... ... १८
श्लेष्मोदरचिकित्सा ... ... २०

अर्शोरोगाध्यायः त्रिपञ्चाशत्तमः [ १२८ पृ०—१३० पृ० ]
अर्शोलक्षणम् ... ... १
तच्चिकित्सा ... ... ३

उत्कर्णरोगाध्यायः चतुःपञ्चाशत्तमः [ १३० पृ०—१३१ पृ० ]
उत्कर्णलक्षणचिकित्सितम् ... ... १

वातव्याध्यध्यायः पञ्चपञ्चाशत्तमः [ १३२ पृ०—१३३ पृ० ]
मन्यास्तम्भादिलक्षणानि ... ... १
एषां चिकित्साः ... ... १३

उन्मादाध्यायः षट्पञ्चाशत्तमः [ १३३ पृ०—१३४ पृ० ]
उन्मादनिदानलक्षणम् ... ... १
तच्चिकित्सा ... ... ५

ग्रहगृहीताध्यायः सप्तपञ्चाशत्तमः [ १३५ पृ०—१३८ पृ० ]
ग्रहनामलक्षणानि ... ... १
तेषां शान्त्यादिचिकित्सा ... ... २३

शोषरोगाध्यायः अष्टपञ्चाशत्तमः [ १३८ पृ०—१३९ पृ० ]
वातादिशोषलक्षणानि ... ... १

श्लोकसंख्या।

एतच्चिकित्सा: ... ... ९

वातवलासकाध्याय: एकोनषष्टितम: १४० पृ०

वातवलासकलक्षणचिकित्सितम् ... ... १

व्यापदाध्याय: षष्टितम: [ १४० पृ०—१४१ पृ० ]

व्यापल्लक्षणचिकित्सितम् ... ... १

विषरोगाध्याय: एकषष्टितम: [ १४१ पृ०—१४२ पृ० ]

विषलक्षणचिकित्सितम् ... ... १

अपस्माररोगाध्याय: द्विषष्टितम: १४३ पृ०

अपस्मारलक्षणचिकित्सितम् ... ... १

षट्पदीभच्चाध्याय: त्रिषष्टितम: १४३ पृ०

षट्पदीभच्चलक्षणचिकित्सितम् ... ... १

साध्यासाध्यविवेकाध्याय: चतु:षष्टितम: [१४४पृ०—१४५पृ०]

रोगाणामसाध्यलक्षणानि ... ... १

साध्यलक्षणानि ... ... १९

प्रकृतिज्ञानाध्याय: पञ्चषष्टितम: १४६ पृ०

वातादिप्रकृतिलक्षणानि ... ... १

रसोनकल्पाध्याय: षट्षष्टितम: [ १४६ पृ०—१४८ पृ० ]

रसोनप्रयोगव्यवस्था ... ... १

गुग्गुलुकल्पाध्याय: सप्तषष्टितम: [ १४८ पृ०—१५० पृ० ]

गुग्गुलुप्रयोगविधि: ... ... १

रसायनकल्पाध्याय: अष्टषष्टितम: [ १५० पृ०—१५१ पृ० ]

रसायनप्रयोगविधि: .. .. १

नकुल कृतम्

## अश्वचिकित्सितम्।

पृष्ठा:

प्रथमोऽध्याय:

प्रश्न: १५२

द्वितीयोऽध्याय:

जात्यधिकारकथनम् ... ... १५४

तृतीयोऽध्याय:

वर्णवर्णनम् ... ... १५६

श्लोकसंख्या ।


चतुर्थोऽध्यायः
आवर्त्तकथनम् ... ... १५८
पञ्चमोऽध्यायः
दन्तकथनम् ... ... १६१
षष्ठोऽध्यायः
सर्वावयवप्रमाणकथनम् ... ... १६२
सप्तमोऽध्यायः
वेगकथनम् ... ... १६४
अष्टमोऽध्यायः
आरोहणकथनम् ... ... १६५
नवमोऽध्यायः
वाहनकथनम् ... ... १६७
दशमोऽध्यायः
ऋतुपरीक्षाकथनम् ... ... १७०
एकादशोऽध्यायः
ऋतुचर्य्याकथनम् ... ... १७६
द्वादशोऽध्यायः
नस्यकथनम् ... ... १८१
त्रयोदशोऽध्यायः
पिण्डकथनम् ... ... १८३
चतुर्दशोऽध्यायः
घृतविधानकथनम् ... ... १८७
पञ्चदशोऽध्यायः
क्वाथवर्णनम् ... ... १८८
षोड़शोऽध्यायः
विषकथनम् ... ... १८९
अष्टादशोऽध्यायः
अश्वशालाविधिकथनम् ... ... १९१

# अश्ववैद्यकम् ।



## प्रथमोऽध्यायः ।

### उद्देशः ।

प्रणम्य शङ्करं भक्त्या शङ्करं सर्वदेहिनाम् ।
शिवाय जगतो जातां शिवाञ्चापि विशेषतः ॥ १ ॥
सुखाववोधशब्दार्थं ग्रन्थविस्तरवर्जितम् ।
लक्षणं वाजिदेहस्थं संक्षेपेण यथाक्रमम् ॥ २ ॥
चिकित्सा च समासेन सिद्धौषधसमन्विता ।
मुनिप्रोक्तानि शास्त्राणि सम्यगालोच्य वाजिनाम् ॥ ३ ॥
श्रीमद्विजयदत्तस्य पुत्रेण क्रियतेऽधुना ।
श्रीमता जयदत्तेन वाहानां हितकाम्यया ॥ ४ ॥
अध्यायानां यथायोगं षष्ठ्याष्टाधिकसंख्यया ।
श्लोकानाञ्च सहस्रेण शताष्टसंयुतेन च ॥ ५ ॥
प्रदेशलक्षणञ्चैव जीवितञ्च वयस्तथा ।
दशाविभागं क्षेत्रञ्च देशस्थानञ्च वाहनम् ॥ ६ ॥
जन्म्याक्रमं प्रसूतायाः शिशोश्च प्रतिपालनम् ।
द्रव्यमात्राविधिञ्चैव निघण्टं शोषणक्रमम् ॥ ७ ॥
विधिं क्षाराग्निशस्त्राणां शिरावेधविधिं तथा ।
निरूहे च विधिञ्चैव विधिञ्चैवानुवासने ॥ ८ ॥
नस्ये स्वेदे विधिञ्चैव स्नेहपाने विधिं क्रमात् ।

तैलपाकविधानञ्च घृतपाकविधिं तथा ॥ ९ ॥
श्रमोपचारं वाहानां तथारिष्टत्रयं पुनः।
वेधारिष्टं पुनश्चैव कटिवेधं तथैव च ॥ १० ॥
मृगरोगचिकित्साञ्च चिह्नपूर्वं समासतः।
वातादीनाञ्च दोषाणां कोपहेतुं तथैव च ॥ ११ ॥
व्याधिनिर्देशमुखरुङ्नेत्ररोगविधिं क्रमात्।
काचं प्रचारं विख्यातं रक्तं विख्यातपाटलम् ॥ १२ ॥
मुञ्जजालं ततश्चेति नेत्ररोगास्तथैव च।
वातात् पित्तात् कफाच्चेति सन्निपातात्तथा पुनः ॥ १३ ॥
रक्ताभिघाताद् ये जाताः शिरोरोगाश्च दारुणाः।
निदानञ्चैव चिह्नञ्च रोगाणाञ्च चिकित्सितम् ॥१४॥
साध्यासाध्यविवेकञ्च कृच्छ्रसाध्ये विनिश्चयम्।
प्रकृतिञ्च तुरङ्गानां कथयाम्यनुपूर्वशः॥
रसोनादींस्तथा कल्कान् मुनिभिः पूर्वनोदितान् ॥ १५ ॥
इति उद्देशाध्यायः।

---

## अथ द्वितीयोऽध्यायः।

### प्रदेशः।

प्रदेशान् वाजिदेहस्थान् यो न वेत्ति विभागतः।
न स जानाति मूढ़ात्मा लक्षणं न चिकित्सितम् ॥१॥
अतएव प्रदेशानां ज्ञानमादौ प्रकीर्त्तितम्।
एतद् यत्नेन बोद्धव्यं वाजिनां हितकाम्यया ॥ २ ॥
अतिप्रसिद्धा जिह्वा या तस्याः सूना भवेदधः।
ऊर्द्धं तालु भवेत्तस्याः तदग्रे दन्तपीठकम् ॥ ३ ॥

ततो दन्ताः समुद्दिष्टा ऊर्द्धं दन्ता भवन्त्यधः।
चिवुकञ्चाधरोभागस्तेषां प्रोक्तं विचक्षणैः॥ ४॥
चिवुकस्योपरिष्टात्तु अधरौष्ठः प्रकीर्त्तितः।
चिवुकात् पार्श्वभागे तु हनुर्नामाभिधीयते॥ ५॥
सृक्कद्वयं विजानीयाद् वक्त्रपार्श्वगतं बुधः।
उत्तरौष्ठः प्रपाणाख्यः तदूर्द्धं प्रोथ उच्यते॥ ६॥
नासाच्छिद्रे तथा पार्श्वे प्रोथस्यैव व्यवस्थिते।
नासाच्छिद्राक्षिमध्ये तु घोणाख्यः समुदाहृतः॥ ७॥
घोणापार्श्वगतौ गण्डौ चौरिके च ततःपरम्।
नेत्रयोरधरे भागे अश्रुपात उदाहृतः॥ ८॥
कर्णान्ते चैव नेत्रान्तमपाङ्गं ब्रुवते बुधाः।
कनीनिकाक्ष्णोर्विज्ञेया यस्य नासासमीपगः॥ ९॥
सितासितञ्च तन्मध्ये नेत्रयोर्मण्डलं हि तत्।
प्रच्छादनं भवेद्वर्त्म चाक्षिकूटमतःपरम्॥ १०॥
तस्मादूर्द्धं भ्रुवोर्लेखा ललाटञ्च तदुत्तरम्।
ऊर्द्धं ललाटदेशात्तु केशान्तञ्च ततः स्रुवः॥ ११॥
ततः शिरो विजानीयात् स्रुवादूर्द्धगतं बुधः।
शिरःपार्श्वगतौ कर्णौ तयोर्मूलन्तु शष्कुली॥ १२॥
अपाङ्गाद् द्व्यङ्गुले चैव शङ्खं विद्याद् विचक्षणः।
शङ्खकर्णान्तरे चैव कटाक्षः समुदाहृतः॥ १३॥
विदुर्मर्म विदुश्चैव कर्णस्याधः षडङ्गुले।
घण्टाबन्धसमीपस्थो निगालः परिकीर्त्तितः॥१४॥
अधस्ताच्च निगालस्य गलमाहुर्मनीषिणः।
ततः कण्ठं विजानीयादधोभागे विचक्षणः॥१५॥
वक्षः क्रोड़ं तथा चैव हृदयं कुक्षिमेव च।
अनुपूर्वं विजानीयादधोभागगतं बुधः॥ १६॥

ग्रीवा लोकप्रसिद्धा तु तस्याश्चोपरि केसरः ।
ग्रीवास्कन्धान्तरे चैव वाहं प्राहुर्मनीषिणः ॥ १७ ॥
वाहस्योपरिजन्तु स्यात् काकसं ककुदश्च तत् ।
ततः पृष्ठं विजानीयादासनं पृष्ठमध्यगम् ॥ १८ ॥
अंसके ककुदश्चैव निबन्धे परिकीर्त्तिते ॥ १९ ॥
स्यातामंसादधे बाहू तयोर्बाह्ये षडङ्गुले ।
बाह्वोरभ्यन्तरे विन्द्यात् किणञ्चातिप्रसिद्धकम् ॥ २० ॥
अधरे च ततो जानु निर्दिष्टं शास्त्रकोविदैः ।
मन्दिरं पश्चिमो भागः कलाची जानुनोऽग्रिमः ॥ २१ ॥
जानुनोश्चाप्यधोभागे जङ्घां विन्द्याद्विचक्षणः ।
जङ्घापार्श्वे कलां विन्द्यात् सन्ध्यञ्चैषिकसंज्ञकम् ॥ २२ ॥
अग्रतः पलिहस्तस्याः पश्चात् कूर्च उदाहृतः ।
किणं तत्रैव मध्यस्थमधोभागे च कुष्ठिकम् ॥ २३ ॥
खुरसन्धिं ततो विन्द्यादधोभागे ततः खुरम् ।
खुरस्य पार्श्वे पार्ष्णिः स्यादग्रभागे नखो भवेत् ॥ २४ ॥
खुरस्याधस्तलं चैव मण्डूको तलमध्यतः ।
खुरमासं विजानीयात् चौरिकाख्यं विचक्षणः ॥ २५ ॥
हृदयात् परतः कुक्षी पार्श्वतश्च विभागतः ।
कुक्षिमध्ये भवेद्रन्ध्रमुपरन्ध्रं तदूर्द्धगम् ॥ २६ ॥
जठरं पार्श्वमध्यस्थं तस्य नाभिश्च मध्यतः ।
रोमराजीं ततो विन्द्यात् मूत्रकोशमतःपरम् ।
आकस्याः पश्चिमे भागे पुटौ स्फिचौ च कीर्त्तिते ॥ २७ ॥
पुच्छमूलन्तु वाहानां मांसलं पुच्छमूलतः ।
तस्याधः कीर्त्तितः पायुः सीवनी च ततः परम् ॥ २८ ॥
मुष्कौ च कटिसन्धिश्च ततो विन्द्यात् परं बुधः ।
अधस्तात् कटिसन्धेस्तु ऊरुसन्धिरुदाहृतः ॥ २९ ॥

सक्थिनी फलसन्धिस्तु ऊरूपान्ताभिधानकः।
ततः खुरं विजानीयात् तस्याधो मन्दिरं भवेत् ॥३०॥
किणञ्चैव ततो विन्द्यात् मञ्जिराभ्याससंस्थितम्।
ततः परं विजानीयात् कलां कूर्चञ्च कुष्ठिकम् ॥ ३१ ॥
खुरान्तसंज्ञं मण्डूकं ततो विन्द्याद्विचक्षणः।
अङ्गजङ्घाद्वयञ्चैव वक्षो ग्रीवा शिरोमुखम् ॥ ३२ ॥
पूर्वकायः समुद्दिष्टः पृष्ठदेशस्तु मध्यमः।
आकटेः पश्चिमो भागः खुरान्तश्चापरोऽमतः।
इति प्रदेशा विख्याताः पूर्वशास्त्रानुसारतः ॥ ३३ ॥

इति प्रदेशाध्यायः।

---

## अथ तृतीयोऽध्यायः

### सर्वलक्षणः।

#### अङ्गलक्षणानि।

अतःपरं प्रवक्ष्यामि वाहानां लक्षणं स्मृतम्।
लक्षणं शृणु वाहानां मुनिना यत्तु भाषितम् ॥ १ ॥
सर्वदोषप्रहरं नित्यं नृपाणां जयवर्द्धनम्।
अशुभैर्लक्षणैर्युक्ता हया न ग्रहणोचिताः ॥ २ ॥
अतो लक्षणमेवादौ तेषां वक्ष्यामि देहजम्।
ओष्ठयोः सृक्कणोश्चैव जिह्वायां दशनेषु च ॥ ३ ॥
वक्त्रे तालुनि नासायां गण्डयोर्नेत्रयोस्तथा।
ललाटे मस्तके चैव केशे कर्णपुटे तथा ॥ ४ ॥
ग्रीवायां केशरे चापि स्कन्धे वक्षसि बाहुके।
जङ्घायां जानुनोश्चाधः कूर्चे पादे तथैव च ॥ ५ ॥

पार्श्वयोः पृष्ठभागे च कुक्षौ कथ्याश्च वालधौ ।
मेहने मुष्कयोश्चापि तथा चैवोरुकद्वयोः ॥ ६ ॥
आवर्त्ते पुण्ड्रके पुष्पे गतौ वर्णे स्वरे तथा ।
महादोषे तथोत्पाते छायायां गन्धसत्वयोः ॥ ७ ॥
प्रमाणे चैव वाहानां लक्षणं यत्प्रतिष्ठितम् ।
शुभाशुभविवेकाय तद्विन्द्याद् बुद्धिमान् भिषक् ॥ ८ ॥
शालिहोत्रादिभिर्ज्ञातं त्रिकालज्ञानकोविदैः ।
आताम्रौ पूजितावोष्ठौ बालद्दीनौ मृदुत्वचौ ॥ ९ ॥
सुप्रोथस्तून्नतः शस्तो विपरीतं विवर्जयेत् ।
सृक्कणोर्मृदुता शस्ता जिह्वायां रक्तता तथा ॥ १० ॥
अतश्चान्यद्धि दोषाय तन्वी दीर्घा च सा शुभा ।
घनाः स्निग्धाः सुबद्धाश्च समा दन्ताः सुशोभनाः ॥ ११ ॥
षट्संख्येष्वधरौष्ठे च तेषु व्यञ्जनसम्भवः ।
आननं तुङ्गघोणञ्च निर्मांसं प्रियदर्शनम् ॥ १२ ॥
सुगन्धि पूजितं वक्त्रं विपरीतं विगर्हितम् ।
तालु रक्तं प्रशस्तञ्च सुपुटे चैव नासिके ॥ १३ ॥
नात्युल्वणौ समौ गण्डौ वाहानां कीर्त्तितौ शुभौ ।
अत्यन्तं निर्गते चैव सुबद्धे नैव चाविले ॥ १४ ॥
प्रशस्ते वाजिनां नेत्रे मध्याभेऽमलतारके ।
स्निग्धायते विशाले च श्लिष्टे मधुनिभेक्षणे ॥ १५ ॥
स्वर्णप्रभे विशाले च शस्ते वाहस्य लोचने ।
सावर्त्तञ्चाप्यनिम्नञ्च विशालञ्चैव वाजिनाम् ॥ १६ ॥
ललाटं पूजितं प्राहुर्मुनयः शास्त्रकोविदः ।
शिरः समं तथा वृत्तमावर्त्तद्वयभूषितम् ॥ १७ ॥
केशाश्च मृदवः स्निग्धा वहवश्चैव पूजिताः ।
ह्रस्वता कर्णयोश्चैव तीक्ष्णता तनुता तथा ॥ १८ ॥

अदीर्घरोमता चैव प्रशस्तेति प्रकीर्त्तिता ।
सुवृत्तां कुञ्चिताश्चैव धन्यां ग्रीवां विदुर्बुधाः ॥ १९ ॥
केशरश्च जटाहीनो मृदुश्चैव प्रशस्यते ।
सुबद्धः सुदृढ़श्चैव स्कन्धो वाहस्य पूजितः ॥ २० ॥
प्रशस्तं विपुलं वक्षो निर्गतं विशिरञ्च यत् ।
ऋजुवृत्तसमौ बाहू गूढं जानु प्रशस्यते ॥ २१ ॥
अवक्रा मांसहीना च वाजिजङ्घा शुभा स्मृता ।
सुवृत्तं सुसमञ्चैव नातिस्तब्धं नचोन्नतम् ॥ २२ ॥
कूर्चमेवंविधं विद्याद् ग्रन्थिव्रणविवर्जितम् ।
दृढ़मण्डूकिकायुक्तो वर्त्तुलः श्लिष्टसन्धिकः ॥ २३ ॥
खुरः खरखुराकारः प्रशस्तः समुदाहृतः ।
पार्श्वे चैव समे वृत्ते ऊर्द्ध्वं मांसोपशोभिते ॥ २४ ॥
अविलम्बि सुवृत्तञ्च उदरञ्चातिपूजितम् ।
नातिदीर्घं समं पृष्ठं किञ्चिच्च विनतं शुभम् ॥ २५ ॥
सुवृत्ता चैव पीना च कटिर्धन्या प्रकीर्त्तिता ।
मृदुस्निग्धायतैर्युक्तं वालैः पुच्छं प्रशस्यते ॥ २६ ॥
वृषणौ च समौ वृत्तौ ईषल्लम्बावलोमशौ ।
कृष्णवर्णविहीनन्तु ह्रस्वं मेहनमीष्यते ॥ २७ ॥
आनुपूर्व्यायतं पीनं शोभितञ्चोरुकद्वयम् ।
पूर्वजङ्घेव जङ्घादि खुरान्तञ्चापि पश्चिमम् ।
शालिहोत्रादिभिः प्रोक्तं मुनिभिः सर्ववेदिभिः ॥ २८ ॥

आवर्त्ताः ।

अथातः संप्रवक्ष्यामि आवर्त्तानां विनिश्चयम् ।
शुभाशुभविवेकाय यथा शास्त्रे व्यवस्थितम् ॥ २९ ॥
विंशतिस्तु शुभाः प्रोक्ताः षट्सप्तत्यधिकाः स्मृताः ।
उत्तरोष्ठं प्रपाणं स्यात्तत्रावर्त्ताः शुभावहाः ॥ ३० ॥

शुक्रणोश्च तथा प्रोक्ताः सर्वकामफलप्रदाः ।
त्रयश्चैवाथ चत्वारो वाजिनो यस्य रोमजाः ॥ ३१ ॥
द्वौ वा ललाटजौ यस्य स तु धन्यतमः स्मृतः ।
आनुपूर्व्या स्थिता चोर्द्ध्वं ललाटे रोमजास्त्रयः ॥ ३२ ॥
निःश्रेणी नाम सा ख्याता भर्त्तुः सर्वार्थसाधिनी ।
शिरःकेशान्तयोर्मध्ये श्रवो नामाभिधीयते ॥ ३३ ॥
तत्रावर्त्तः स्मृतोऽश्वस्य भर्त्तुर्जयविवर्द्धनः ।
घण्टाबन्धसमीपस्थो निगालः कीर्त्तितो बुधैः ॥ ३४ ॥
तस्मिन् देवमणिर्नाम रोमजः शुभकृत् स्मृतः ।
कर्णमूले तथा बाह्वोः केशान्ते मस्तके तथा ॥ ३५ ॥
आवर्त्ताः पूजिता नित्यं विशेषेण तु मस्तके ।
आवर्त्ता यस्य चत्वारो वाजिनो वक्षसि स्थिताः ॥ ३६ ॥
एकः कण्ठे भवेत् स्पष्टः स धन्यः सर्वकामदः ।
रन्ध्रे चैव यदा भर्त्तुरीप्सितार्थप्रदो भवेत् ॥ ३७ ॥
उपरन्ध्रे भवेच्चैव रोमजश्चातिपूजितः ।
शङ्खचक्रगदावज्रशक्तिपद्मोपमाश्च ये ॥ ३८ ॥
विशेषेण शुभाः प्रोक्ता रोमजाः शुभदेशजाः ।
अत ऊर्द्ध्वं प्रवक्ष्यामि रोमजानतिनिन्दितान् ॥ ३९ ॥
भर्त्तुः क्लेशावहान् सर्वान् धनप्राणापहारकान् ।
नासिकापुटयोर्मध्ये प्रदेशः प्रोथ उच्यते ॥ ४० ॥
तत्र भर्त्तुर्विनाशाय रोमजश्च प्रकीर्त्तितः ।
ऊर्द्ध्वश्च नासिकाच्छिद्रात् स्वामिनः क्लेशकारकः ॥ ४१ ॥
गण्डयोश्चैव भर्त्तारं हन्त्यावर्त्तो दुरासदः ।
अश्रुपातः समुद्दिष्टः प्रदेशश्चक्षुषोरधः ॥ ४२ ॥
तत्रावर्त्तो भवेद्रोमः स्वामिनः कुलनाशनः ।
अपाङ्गाद् द्व्यङ्गुले चैव प्रदेशः शङ्ख उच्यते ॥ ४३ ॥

तस्मिन् भर्त्तुर्विनाशाय भवेद्वाहस्य रोमजः।
भ्रूप्रदेशमसम्भूत आवर्त्तो नैव पूजितः॥ ४४॥
सुहृद्वियोगकृत् सः स्याद्भर्त्तुरर्थविसादकः।
मन्यां ग्रीवां शिरो विन्द्यात्तत्रावर्त्तस्तु कुत्सितः॥ ४५॥
कण्ठयोश्चापि संग्रामे स्वामिनश्चाशु घातयेत्।
चिवुकस्य समीपस्थो वामदक्षिणभागतः॥ ४६॥
प्रदेशस्तु हनुर्नाम तत्रावर्त्तो हि दारुणः।
अधरौष्ठस्य वाधस्ताच्चिवुकं हि प्रसिद्धकम्॥ ४७॥
तस्मिन् पापो भवेद्भर्त्तुः कर्णयोश्चापि रोमजः।
कण्ठस्याथ निगालस्य मध्ये गलक उच्यते॥ ४८॥
तत्रावर्त्तः स्मृतः पापः स्कन्धसन्धिगतश्च यः।
अधस्ताज्जङ्घयोश्चैव ग्रन्थिः कूर्च इति स्मृतः॥ ४९॥
तत्रावर्त्तः स्मृतो भर्त्तुः संग्रामे जीवितान्तकृत्।
कूर्चादष्टाङ्गुलं चोर्द्ध्वं पार्श्वयोस्तु कला स्मृता॥ ५०॥
तत्र भर्त्तुः शराघातैर्जीवितान्तश्च रोमजः।
ककुदं वृषभस्येव सुव्यक्तमुपलक्षयेत्॥ ५१॥
वाजिनो यस्य तत्र स्यादावर्त्तः स्वामिनाशनः।
ककुदस्य पुरोभागे समीपे वह उच्यते॥ ५२॥
भर्त्तुः सुतसमेतस्य तस्मिन्नाशाय रोमजः।
काकसेतु च यस्य स्यादावर्त्तस्तस्य दारुणः॥ ५३॥
रणे हतः समं भर्त्रा क्रव्याद्भिः स विलुप्यते।
क्रोड़े चैवासने चापि हृदये चैव जानुनि॥ ५४॥
आवर्त्ताः स्वामिघाताय भवन्त्येव न संशयः।
पार्श्वयो रोमजो यस्य स चाश्वो नयति क्षयम्॥ ५५॥
सपक्षश्चाशु भर्त्तारं नीहाराम्बु यथा रविः।
कूर्चस्याधः प्रदेशस्तु कुष्ठिकः परिकीर्त्तितः॥ ५६॥

अधन्यस्तत्र वाहस्य जङ्घयोर्जानुनोश्च यः ।
नाभिजो मुष्कजश्चैव त्रिकजश्च विशेषतः ॥ ५७ ॥
पुच्छमूलस्थितश्चापि नैव धन्यः प्रकीर्त्तितः ।
कुक्षौ व्याधिं नियच्छन्ति रोमजाः कुक्षिसम्भवाः ॥ ५८ ॥
पायुसीवनिमध्यस्था नैव धन्यास्तु कीर्त्तिताः ।
स्फिक्पिण्डे स्थूरके चैव यस्यावर्त्तौ हि वाजिनः ॥ ५९ ॥
लिङ्गावर्त्तः स विख्यातो भर्त्तुः सर्वार्थनाशकः ।
शतपाटीति विख्यातस्तथा वै मुकुलोऽपरः ॥ ६० ॥
आवर्त्तश्चैव सङ्घातः पादुकश्चार्द्धपादुकः ।
शुक्तिश्चैवावलीढश्च आवर्त्तः कीर्त्तितोऽष्टधा ॥ ६१ ॥
वाजिदेहगतः सम्यक् शुभाशुभनिवेदकः ।
शतपाटीसमाकारः शतपाटीति कीर्त्तितः ॥ ६२ ॥
जातीमुकुलसङ्काशो मुकुलः समुदाहृतः ।
आवर्त्तो भ्रमितैर्बालैः सङ्घातो रोमपुञ्जकैः ॥ ६३ ॥
शुक्तिश्च शुक्तिसंस्थानैः रोमभिर्व्यक्तलक्षणैः ।
वत्सावलीढकाकारोऽवलीढः परिकीर्त्तितः ॥ ६४ ॥
पादुकः पादुकाकारस्तथा चैवार्द्धपादुकः ।
बाले विशेषसंस्थाने निर्दिशेन्मतिमान् भिषक् ॥ ६५ ॥
शास्त्रमार्गानुसारेण यथा प्रोक्तं विचक्षणैः ।
एतेषामेव सर्वेषामावर्त्तानां तपोधनैः ॥ ६६ ॥
रोमजेति कृता संज्ञा वाजिलक्षणवेदिभिः ।
शुभाशुभौ तु यत्र द्वौ तत्रैको न फलप्रदः ॥ ६७ ॥
एको हेम्ना दहेत्पापं तेन दोषो न दुष्यति ।
अथवा द्विजमुख्याय वेदादिगुणवान् हयः ॥ ६८ ॥
दत्त्वा ग्राह्यः क्रयेणैव दुरावर्त्तस्तु काकुदी ।
श्रीहृच्चौ रोमजश्चैव रोचमानस्तथैव च ॥ ६९ ॥

अङ्गदी मुषली चैव राज्यरत्नप्रदः सदा ।
प्रपाणे मारुतं विन्द्याल्ललाटे च हुताशनम् ॥ ७० ॥
उरसि चाश्विनौ देवौ चन्द्रसूर्य्यौ च मूर्द्धनि ।
रन्ध्रे स्कन्दविशाखौ च उपरन्ध्रे हरो हरिः ॥ ७१ ॥
इत्येवं पूजिता ह्येते दशावर्त्तास्तु वाजिनः ।
अप्येकेन विहीनाश्चेद् भवेयुरशुभास्तदा ॥ ७२ ॥

पुण्ड्रकाः ।

अत ऊर्द्ध्वं प्रवक्ष्यामि पुण्ड्राणां लक्षणं शुभम् ।
आनुपूर्व्या यथादृष्टं मुनिभिस्तत्त्वार्थवेदिभिः ॥ ७३ ॥
शक्तिशङ्खगदाखड्गपद्मचक्राङ्कुशोपमाः ।
शरासनसमाकाराः प्रशस्ताः पुण्ड्रकाः स्मृताः ॥ ७४ ॥
मत्स्यभृङ्गारप्रासादस्रग्वेदीयूपसन्निभाः ।
श्रीवृक्षदर्पणाकाराः शुभदाः परिकीर्त्तिताः ॥ ७५ ॥
शिरो ललाटवदनं यः पुण्ड्रो व्याप्य तिष्ठति ।
स धन्यः पूजितो नित्यं ऋजुकश्चैव यो भवेत् ॥ ७६ ॥
पर्वतेन्दुपताकाभा ये च स्रग्दामसन्निभाः ।
ते सर्वे पूजिताः पुण्ड्रा धनधान्यफलप्रदाः ॥ ७७ ॥
इति पुण्ड्राः शुभाः प्रोक्ताः पूर्वशास्त्रानुसारतः ।
अशुभांश्चैव वक्ष्यामि यथायोगं समासतः ॥ ७८ ॥
काककङ्ककबन्धाहि गृध्रगोमायुसन्निभाः ।
असिताः पीतका रक्ताः पुण्ड्रका नैव पूजिताः ॥ ७९ ॥
तिर्य्यग्गाश्चैव विच्छिन्नाः शृङ्खलापाशसन्निभाः ।
शूलाग्रा वामदेहस्थाः पुण्ड्रका न शुभाः स्मृताः ॥ ८० ॥
जिह्वाकल्मषरूक्षाणि भस्मवर्णनिभानि च ।
पुण्ड्रकाणि न शस्यन्ते भिन्नवर्णानि वाजिनः ॥ ८१ ॥

पुष्पाणि ।

आगन्तवस्तुरङ्गस्य ये भवन्त्यन्यवर्णगाः ।
विन्दवः पुष्पसंज्ञास्तु ते हिताहितसंज्ञकाः ॥ ८२ ॥
तेषां प्रदेशभेदेन लक्षणं यद् व्यवस्थितम् ।
तत्तथैव समासेन विस्पष्टं कीर्त्त्यतेऽधुना ॥ ८३ ॥
अपाने च ललाटे च भ्रुवोर्मूर्द्धनि कर्णयोः ।
निगाले चैव केशान्ते पुष्पं धन्यतमं स्मृतम् ॥ ८४ ॥
स्कन्धे वक्षसि कक्षे च मुष्कयोर्बाहुकेशयोः ।
हन्वोः पृष्ठे च वाहानां पुष्पं स्वामिहितप्रदम् ॥ ८५ ॥
नाभौ केशे तथा कण्ठे दन्ते चैव हि वाजिनाम् ।
पुष्पं धन्यतमं प्रोक्तं भर्त्तुः सर्वार्थसाधकम् ॥ ८६ ॥
अप्रशस्तानि दृष्टानि मुनिभिर्यानि वाजिनाम् ।
तानि सम्यक् प्रवक्ष्यामि पुष्पाण्यागमदर्शनात् ॥ ८७ ॥
अधरौष्ठे कठे प्रोथे उत्तरौष्ठे तथैव च ।
घोणायां गण्डयोश्चैव शङ्खयोश्च तथा भ्रुवोः ॥ ८८ ॥
ग्रीवायाञ्च वङ्गे चैव सृक्कणोः स्थूरके स्फिचि ।
पायौ क्रोड़े च पुष्पाणि निन्दितानीति निश्चयः ॥ ८९ ॥
रक्तं पीतं तथा कृष्णं पुष्पं सर्वत्र नेष्यते ।
शुभप्रदेशसञ्जातं भवेत् साधारणं ततः ॥ ९० ॥
पुत्रलाभं धनप्राप्तिमारोग्यं विजयं तथा ।
विन्द्यात् पुष्पैः शुभैर्भर्त्तुरशुभैश्च विपर्य्ययम् ॥ ९१ ॥
सर्वाङ्गपुष्पितो वाजी परित्याज्यो न संशयः ॥ ९२ ॥

गतयः ।

दूरमुत्क्षिप्य यः पादांस्तप्ताङ्गारान् स्पृशन्निव ।
पुत्नं याति सुसंहृष्टो वाजी भद्रगतिस्तु सः ॥ ९३ ॥
पूजिता वृषमातङ्गसिंहशार्दूलगामिनः ।

अतोऽन्यगतयो नेष्टा सर्वदैव तुरङ्गमाः॥ ९४॥
सङ्कीर्णा विकटभ्रष्टा वक्राः सौष्ठववर्जिता।
अत्यूर्द्ध्वबलिता चैव वाजिनां निन्दिता गतिः॥ ९५॥
षोड़शच्छोटिकाभिस्तु करवेष्टितजानुभिः।
शतं द्विगुणितं गत्वा हस्तानां पुनरेति यः॥ ९६॥
स शीघ्रगतिरित्युक्तो वाजी धन्यस्तपोधनैः।
दृशहीना भवन्त्येते मध्यमाधमगा हयाः॥ ९७॥

वर्णाः।

चक्रवाकादिभिर्वर्णैः शालिहोत्रादिभिः स्मृतैः।
पाटलाद्यैश्च लोकस्य व्यवहारो न साम्प्रतम्॥ ९८॥
तस्मात् प्रसिद्धकान् वर्णान् वाजिनां देहसम्भवान्।
समासेन यथायोगं कथयाम्यनुपूर्वशः॥ ९९॥
श्वेतः कोकाह इत्युक्तः कृष्णः खुङ्गाह उच्यते।
पीतको हरितः प्रोक्तः कषायो रक्तकः स्मृतः॥ १००॥
पक्वतालनिभो वाजी कयाहः परिकीर्त्तितः।
पीयूषवर्णः सेराहो गर्दभाभः सुरूहकः॥ १०१॥
नीलो नीलक एवाश्व स्वियूहः कपिलः स्मृतः।
खिलाहः कपिलो वाजी पाण्डुकेशरबालधिः॥ १०२॥
हलाहश्चित्रलश्चैव खङ्गाहः श्वेतपीतकः।
ईषत्पीतः कुलाहस्तु यो भवेत् कृष्णजानुकः॥ १०३॥
कृष्णा चास्ये भवेल्लेखा पृष्ठवंशानुगामिनी।
उराहः कृष्णजानुस्तु मनाक् पाण्डुस्तु यो भवेत्॥ १०४॥
वेरुहानः स्मृतो वाजी पाटलो यः प्रकीर्त्तितः।
रक्तपीतकषायोत्थवर्णजो यस्य दृश्यते॥ १०५॥
उकनाहः स विख्यातो वर्णो वाहस्य देहजः।
पूर्वोक्तानाञ्च वर्णानां सुखपुण्ड्रेण वाजिनाम्॥ १०६॥

ये भवन्त्यपरे भेदा स्तान् ब्रवीम्यनुपूर्वशः ।
कोकाहः पुण्ड्रकेणाश्वः कोक्कुराहः प्रकीर्त्तितः ॥ १०७ ॥
खरराहश्च खङ्गाहो हरिको हरिरोहकः ।
कलाहश्चैव वोल्लाहः सेराहः सरराहकः ॥ १०८ ॥
कुलाहः कुलराहस्तु सुराहः सुरराहकः ।
वोरराहो भवेदश्वो वोरराहस्तु यः स्मृतः ॥ १०९ ॥
दुकुलाहो दुरूराहः पुण्ड्रकेणैव कीर्त्तितः ।
त्रियूहस्त्रियुराहश्च चित्रलाङ्गश्च यो भवेत् ॥ ११० ॥
अत ऊर्द्धं प्रवक्ष्यामि शुभाशुभविनिश्चयम् ।
वाजिदेहगतानां हि वर्णानां पूर्वशास्त्रतः ॥ १११ ॥
यस्य गौराणि पीतानि गात्ररोमाणि वाजिनः ।
स भर्त्तुः श्रियमाधत्ते यस्य रक्तसितानि च ॥ ११२ ॥
यस्य पादाः सिताः सर्वे पुच्छं वक्षो मुखं तथा ।
मूर्द्धजाश्च सिता यस्य तं विद्यादष्टमङ्गलम् ॥ ११३ ॥
प्रभूताः सिततारास्च प्रशस्ता मुनिभिः स्मृताः ।
रक्तपीता सितसितैरधन्यः कीर्त्तितो हयः ॥ ११४ ॥
प्रशस्तकृष्णतारस्तु मल्लिकाक्षः प्रकीर्त्तितः ।
श्वेतया वेष्टितं कृष्णं रेखया तारकं भवेत् ॥ ११५ ॥
मल्लिकाक्षः स विज्ञेयः स्वामिनः सुखवर्द्धनः ।
सिततारोऽप्रशस्तश्च स्वामिनः क्लेशवर्द्धनः ॥ ११६ ॥
सर्वश्वेतश्च कृष्णश्च रक्तः पीतस्तथैव च ।
एते सांग्रामिकाः प्रोक्ताः तुरङ्गा मुनिसत्तमैः ॥ ११७ ॥
हरिताः किल जायन्ते वाजिनः पुण्यदर्शनाः ।
ते हिताय नरेन्द्राणां जयारोग्यधनप्रदाः ॥ ११८ ॥
रक्तास्यमेहनः शस्तः श्यामकर्णश्च यः सितः ।
कपोतसमवर्णस्तु यो वाहः शुक्लकेशरः ॥ ११९ ॥

शुक्लपादमुखो वाजी प्रशस्तः परिकीर्त्तितः।
चतुर्णाञ्चैव वर्णानां शुक्लता यस्य वाजिनः॥ १२०॥
मुखे सिततरश्चैव पञ्चभद्रः स उच्यते।
श्वेतमण्डलचित्रश्च भर्त्तुः सर्वार्थसाधकः॥ १२१॥
पाण्डुरा यस्य रेखा स्यात् पृष्ठवंशानुगामिनी।
श्वेतकृष्णशिरा यश्च नैव धन्यः प्रकीर्त्तितः॥ १२२॥
अन्यवर्णं शिरो यस्य पुच्छं वा यस्य वाजिनः।
पुच्छेन शिरसा वापि नानावर्णेन निन्दितः॥ १२३॥
अव्यक्तवर्णो यो वाहस्तथा तित्तिरसन्निभः।
कुत्सितो वानराभश्च यो वा व्याघ्रावलीढकः॥ १२४॥

स्वराः।

ह्रेषितं मधुरश्चैव तुरङ्गस्य प्रशस्यते।
अविच्छिन्नमदीनञ्च गम्भीरं सानुनासिकम्॥ १२५॥
दृष्ट्वाग्निपूर्णपात्रञ्च ब्राह्मणं कुसुमानि च।
दधि चापि समालोक्य वाहानां ह्रेषितं शुभम्॥ १२६॥
वादित्रध्वनिमाकर्ण्य ह्रेषन्ते यदि वाजिनः।
ग्रासपूर्णमुखाश्चैव तदा भर्त्तुर्जयो भवेत्॥ १२७॥
ध्वजाग्रञ्चैव सूर्य्यञ्च पश्यन्तो वाजिनो यदा।
ह्रेषन्तो बहवो हृष्टास्तदा विद्याज्जयं विभोः॥ १२८॥
अतो यद्विपरीतन्तु ह्रेषितं कुत्सितन्तु तत्।
मिम्मिनं गद्गदं मूकं विरूक्षं कासजर्जरम्॥ १२९॥
ईदृशं ह्रेषितं नेष्टं हयानाञ्च तपोधनैः।
वाजिशास्त्रार्थतत्त्वज्ञैः कीर्त्तितं मुनिसत्तमैः॥ १३०॥
बाले रोगिणि वृद्धे च क्षुधिते च पिपासिते।
श्रान्ते भीते कृशे वाहे न ग्राह्यं स्वरलक्षणम॥ १३१॥

अथ यः पुलतोऽश्वस्य शनैरविशदो ध्वनिः ।
अन्तरुत्पद्यते कश्चित्तदश्वप्लुत उच्यते ॥ १३२ ॥
तत्र कूकत्यधो नाभेर्गुदवस्त्यण्डमाश्रितः ।
चतसृष्वन्त्रशाखासु वायुरेवोर्द्ध्वमुच्छलन् ॥ १३३ ॥
अतोऽश्वानां न वेगः स्यात् स्थिराणां न च जृम्भणा ।
तासामधोमुखत्वाच्च न भवेद् वड़वास्वपि ॥ १३४ ॥

## महादोषाः ।

काकुदी कृष्णजिह्वश्च कृष्णशेफाण्डतालुकः ।
करालो हीनदन्तश्च शृङ्गी चाधिकदन्तकः ॥ १३५ ॥
एकाण्डश्चैव जाताण्डः कञ्चुकी त्रिसरी तथा ।
मार्जारपादो व्याघ्राभस्त्रिकर्णो द्विखुरी स्तनी ॥ १३६ ॥
यमजो वामनश्चैव कुर्ज्जस्तित्तिरसन्निभः ।
वानराक्षो विड़ालाक्षो मुषली चेन्द्रवृद्धकः ॥ १३७ ॥
येषां पृष्ठे हतो भर्त्ता जातदन्तस्तथैव च ।
एते दोषान्विता वाहा न ग्राह्या भूतिमिच्छता ॥ १३८
धनप्राणहरा ह्येते बन्धुविग्रहकारकाः ।
एषां चिह्नं प्रवक्ष्यामि येन जानन्ति सादिनः ॥ १३९ ॥
पूर्वशास्त्रानुसारेण मुनीनां वचनं यथा ।
आवर्त्तो यस्य ककुदि काकुदी स उदाहृतः ॥ १४० ॥
करालो वाधरे दन्तो जायते यस्य चोत्तरः ।
चतुर्भिः पञ्चभिश्चैव हीनदन्तः प्रकीर्त्तितः ॥ १४१ ॥
सप्तभिश्चाष्टभिर्दन्तैः ख्यातश्चाधिकदन्तकः ।
अङ्गुष्ठपर्वसङ्काशः छागशृङ्गोपमस्तथा ॥ १४२ ॥
जम्बूवदररूपश्च तथा चामलकोपमः ।
आम्रास्थिसदृशश्चापि हरीतक्याः फलोपमः ॥ १४३ ॥

दग्धचर्मनिभश्चापि वालुसंस्थान एव च।
कीलः कर्णान्तरे यस्य केशान्ते चापि दृश्यते ॥ १४४ ॥
धौरेयः सर्वपापानां शृङ्गी वाहः स कीर्त्तितः।
एवंविधेन शृङ्गेन शृङ्गी राष्ट्रे न वासयेत् ॥ १४५ ॥
एकेन लम्बमानेन मुष्केणैकाण्डसंज्ञकः।
अत्यन्तरोमशाभ्यान्तु ताभ्यां जाताण्ड उच्यते ॥ १४६ ॥
स्कन्धे वक्षसि वाहोश्च अंसदेशे तथैव च।
अन्यवर्णो भवेद्वाजी कञ्चुकी स प्रकीर्त्तितः ॥ १४७ ॥
यस्यान्यवर्णा रेखा स्यात् पादे कूर्चे च वाजिनः।
मार्जारपादः प्रोक्तोऽसौ न धन्यः कुलनाशनः ॥ १४८ ॥
अन्यवर्णस्य वाहस्य शिरः कृष्णं यदा भवेत्।
त्रिसरो नाम सः प्रोक्तो भर्त्तुः कुलविनाशनः ॥ १४९ ॥
द्विखुरं गोखुराकारं खुरैर्विन्द्याद्विचक्षणः।
अथवा सिवनीयुक्तैर्निम्नमध्यैस्तु निर्दिशेत् ॥ १५० ॥
वृषणाभ्यां सजाताभ्यां सञ्जातवृषणो भवेत्।
तद्वद्वृषणसञ्जातस्तनाभ्यां विद्यते स्तनौ ॥ १५१ ॥
त्रिभिः कर्णैस्त्रिकर्णी च व्याघ्राभो व्याघ्रवर्णकः।
एकेनाङ्गेन हीनेन भिन्नेन च विशेषतः ॥ १५२ ॥
यमजं वाजिनं विन्द्याद् वामनं वामनाकृतिम्।
वर्णादेकेन पादेन अन्यवर्णेन वो हयः ॥ १५३ ॥
मुषलीति समाख्यातो वाजिशास्त्रविशारदैः।
विरोधं नैव यो याति दृष्ट्वाश्वां मुष्कवर्जितः ॥ १५४ ॥
इन्द्रवृद्धः स विख्यातो भर्त्तुश्च कुलनाशनः।
अथ चेद् वड़वायान्तु विरोधमधिगच्छति ॥ १५५ ॥
निगूढ़वृषणश्चाश्वः स धन्यः सर्वकामदः।
द्वि वर्षात्तु समारभ्य यावता पञ्चवार्षिकः ॥ १५६ ॥

दन्तानां मुष्कयोश्चैव सम्भवो वाजिनः स्मृतः ।
अत ऊर्द्ध्वं न जायन्ते मुष्कौ दन्ताश्च वाजिषु ॥ १५७ ॥
अशुभन्तु फलं वाच्यमभावेन शुभाशुभम् ।
सुरथस्य गतं राज्यं ककुदस्यैव दूषणात् ॥ १५८ ॥
हतकम्बलवैकर्णपशुदन्ताश्च पाण्डुरात् ।
शृङ्गिणी स्तनदोषेण स्तनी च सगरे क्षयम् ।
जाम्बावर्त्तश्वदोषेण पञ्चत्वं रावणो गतः ॥ १५९ ॥

उत्पाताः ।

अतःपरं प्रवक्ष्यामि तुरगाणां विभागतः ।
ज्वलितेन यथाङ्गेन फलं वाच्यं शुभाशुभम् ॥ १६० ॥
यदा ज्वलति वाहस्य सर्वगात्रे हुताशनः ।
तदा विन्द्यादनावृष्टिमब्दमेकं न संशयः ॥ १६१ ॥
अन्तःपुरविनाशस्तु मेहने ज्वलिते भवेत् ।
उदरे वित्तनाशस्तु पायौ पुच्छे पराजयः ॥ १६२ ॥
उत्तमाङ्गे च वक्त्रे च स्कन्धे चैवासने तथा ।
भर्त्तुर्जयाय वाहानां ज्वलनं यत्र नेत्रजम् ॥ १६३ ॥
धूमं ललाटे बाह्वोश्च तथा वक्षसि निन्दितम् ।
तत्रैव ज्वलनं शस्तं यथा नासासमुद्भवम् ॥ १६४ ॥
यदा व्याधिं विना वाजी ग्रासं त्यजति दुर्मनाः ।
अश्रुपातञ्च कुरुते तदा भर्त्तुरशोभनम् ॥ १६५ ॥
स्वयमेव यदा वक्त्रं हृष्टो लोकयते हयः ।
रावं कृत्वा प्रयाणे तु तदा विद्याज्जयं प्रभोः ॥ १६६ ॥
सर्वदैव शिरोघ्नस्तु सर्वेषां नैव पूजितः ।
वामपादाभिघातस्तु प्रभोर्यात्रा निषेधकः ॥ १६७ ॥
स्वामिन्यारूढमात्रे तु दक्षिणं पार्श्वमात्मनः ।
तुरङ्गमो यदा पश्येत्तदा भर्त्तुर्जयो भवेत् ॥ १६८ ॥

पुच्छभागं यदा बाह्यो वामतो विकिरेत् सदा।
तदा भर्त्तुः प्रवासः स्याद् दक्षिणे विजयस्तथा ॥ १६९ ॥
प्रकिरन्ति यदात्यर्थं सर्वं पुच्छं तुरङ्गमाः।
अकस्मादेव जाताश्च तेषां भीतिः प्रभोः स्मृता ॥ १७० ॥

छाया।

छाया वाजिशरीरेषु शुभाशुभनिवेदिनी।
वाजिनश्च प्रभोश्चैव तां ब्रवीम्यनुपूर्वशः ॥ १७१ ॥
सुस्निग्धा पार्थिवी छाया नानाज्योतिःसमन्विता।
पद्मरागारुणा चैवमाग्नेयी परिकीर्त्तिता ॥ १७२ ॥
शुद्धस्फटिकसङ्काशा सुस्निग्धा चैव वारुणी।
रूक्षा दीना च वायव्या परुषा चैव निन्दिता ॥ १७३ ॥
पार्थिवी च तथाग्नेयी वारुणी या च कीर्त्तिता।
तिस्रस्तु शुभदाश्छाया वायवी त्वशुभप्रदा ॥ १७४ ॥
प्रस्विन्नानां भवेद् गन्धो वाहानां गात्रसम्भवः।
मतिमद्भिः स निर्दिष्टः शुभाशुभनिवेदकः ॥ १७५ ॥
मनसः कुरुते तुष्टिं घ्राणमार्गगतस्तु यः।
स शुभो वाजिनां गन्धो विपरीतोऽतिकुत्सितः ॥ १७६ ॥
शुभगन्धो भवेद्वाजी धनपुत्रप्रदः प्रभोः।
मित्रावाप्तिजयश्चैव कल्याणञ्च नियच्छति ॥ १७७ ॥
अनिष्टे चैव गन्धे च सर्वमेतदनिष्टकम्।
तस्मात् सर्वप्रयत्नेन सुगन्धोऽश्वः प्रपूजितः ॥ १७८ ॥
संग्राह्यो न तु दुर्गन्धो नायकेन विजानता।
यथाशास्त्रं समुद्दिष्टो गन्धस्तौरङ्गमो मया ॥ १७९ ॥

सत्वानि।

अमेध्ये कर्दमे चैव वस्तमूत्रे विशेषतः।
तृष्णा यस्यास्ति वाहस्य देवसत्वः प्रकीर्त्तितः ॥ १८० ॥

पिशाचसत्वो मन्तव्यो व्यत्ययेन तुरङ्गमः।
देवसत्वः शुभो भर्त्तुः पैशाचश्चाशुभः स्मृतः॥ १८१॥

प्रमाणम्।

सार्द्धं यवत्रयं प्रोक्तमङ्गुलस्य तपोधनैः।
प्रमाणं शालिहोत्राद्यैर्वाजिशास्त्रविशारदैः॥ १८२॥
हस्तोऽङ्गुलानां त्रिंशत्या चतुरुत्तरया स्मृतः।
चतुर्हस्तैस्तु विख्यातः शास्त्रोक्तैरुत्तमो हयः॥ १८३॥
अर्द्धहस्तेन हीनस्तु भवेन्मध्यस्तुरङ्गमः।
मुष्टिशून्येन हस्तेन हीनश्चाप्यधमः स्मृतः॥ १८४॥
ऊर्द्ध्वमानप्रमाणन्तु परिणाहं विनिर्द्दिशेत्।
उत्तमानां च मध्यमानां हीनानाञ्चैव वाजिनाम्॥ १८५॥
अर्द्धसप्तमहस्तन्तु श्रेष्ठं दैर्घ्येण निर्द्दिशेत्।
षड्भिर्मुष्टिविहीनैश्च मध्यमश्च विचक्षणः॥ २८६॥
पञ्चहस्तप्रमाणस्तु जघन्यः समुदाहृतः।
द्वात्रिंशदङ्गुलं वक्रमुत्तमाश्वस्य कीर्त्तितम्॥ १८७॥
पृष्ठं वक्षः कटिञ्चैव मुखतुल्यं समादिशेत्।
अङ्गुलद्वयहीनन्तु मुखादि मध्यमाधमम्॥ १८८॥
निर्द्दिशेन्मतिमांश्चैव वाजिशास्त्रविशारदः।
सप्ताङ्गुलं खुरञ्चैव उत्तमाश्वस्य कीर्त्तितम्॥ १८९॥
षडङ्गुलो भवेन्मध्यो जघन्यश्चतुरङ्गुलः।
षोड़शाङ्गुलदीर्घा तु जङ्घा चैवोत्तमा स्मृता॥ १९०॥
चतुर्दश तथा मध्ये हीने च द्वादशाङ्गुलः।
एवंविधप्रमाणन्तु निर्द्दिष्टं शास्त्रशालिभिः॥ १९१॥
अपाङ्गात् पुच्छमूलन्तु दैर्घ्येणाश्वं प्रमाणयेत्।
खुरान्तात् ककुदं यावदूर्द्ध्वमानेन बुद्धिमान्॥ १९२॥
वक्षोभागे तु संवेष्ट्य रज्ज्वा वा सूत्रकेण वा।

परिणाहं तुरङ्गस्य मापयेन्मतिमान् भिषक् ॥ १८३ ॥
एवं प्रमाणभागेन विभक्ताङ्गः शुभः स्मृतः ।
अतो हीनाधिकाङ्गाश्च हरयो नैव पूजिताः ॥ १८४ ॥

इति श्रीजयदत्तकृतेऽश्वशास्त्रे सर्वलक्षणे
तृतीयोऽध्यायः ।

---

## अथ चतुर्थोऽध्यायः ।

### आयुः ।

आयुर्लक्षणमश्वानामत ऊर्द्धं प्रचक्षते ।
शालिहोत्रादिनिर्दिष्टं यथा पूर्वं तपोधनैः ॥ १ ॥
सुसंहितास्तु ये वाहा ह्रस्वकर्णास्तथैव च ।
स्वरनेत्रस्वभावेषु न दीनाश्चिरजीविनः ॥ २ ॥
महाघोणा महाकाया ये चाश्वाः पृथु वक्षसः ।
तेषां दीर्घं भवेदायुः स्निग्धाङ्गा ये च सर्वदा ॥ ३ ॥
कर्णाग्रे पीड़िते येषां सिन्दूराभस्य दर्शनम् ।
शोणितस्य भवेत् क्षिप्रं ते मताश्चिरजीविनः ॥ ४ ॥
न विष्किरन्ति ये बालं स्वग्रासाय तुरङ्गमाः ।
न वा जिघ्रन्ति ये चापि तेऽपि दीर्घायुषो मताः ॥ ५ ॥
कुष्टिकानां किणा येषां दृश्यन्ते वाजिनां स्फुटाः ।
प्रतिस्रोतः पिबन्त्यम्भो ये च ते दीर्घजीविनः ॥ ६ ॥
पद्मपत्रदलाकारं जिह्वाग्रं यदि वाजिनाम् ।
दन्ताश्च मौक्तिकाकारा लिङ्गं येषाञ्च निर्मलम् ॥ ७ ॥
शीत्कारश्च भवेद् येषां लाङ्गुलं क्षिपतां पुनः ।
प्रस्वेदः शुभगन्धस्तु नखा वै दर्पणोपमाः ॥ ८ ॥
येषाञ्च दृढ़रोमाणि ते सर्वे चिरजीविनः ।

स्निग्धगम्भीरदीर्घाश्च प्रोथजा यस्य वाजिनः।
भवन्ति विपुला रेखास्तं विद्याद्दीर्घजीवितम्॥ ९॥
छत्रचामरभृङ्गारखड्गशङ्खाब्जसन्निभाः।
शुक्तिवज्रदलाकारा ध्वजभद्रासनोपमाः।
श्रीवृत्तस्वस्तिकाभासाः प्रोथरेखाश्चिरायुषाम्॥ १०॥
ऊर्द्धं प्रोथे सिता रेखा यस्य वामेन चोन्नता।
ह्रस्वा वा यस्य वाहस्य न चिरं तस्य जीवितम्॥ ११॥
ऊर्द्धं प्रोथे समा रेखा दृश्यन्ते यदि वाजिनः।
तस्य मृत्युः समुद्दिष्टो दशमं प्राप्य वत्सरम्॥ १२॥
त्र्यङ्गुला द्वादश द्वे च वर्षाणां तस्य जीवितम्।
त्रयोदशाब्दं जीवेद् यो रेखाः स्युश्चतुरङ्गुलाः॥ १३॥
तिर्य्यग्गे चोर्द्धगे चैव रेखे द्वे यस्य वाजिनः।
प्रोथजे यस्य वाहस्य तस्य विद्याच्चतुर्दश॥ १४॥
वामेन वा दक्षिणेन शेते यश्चैव सर्वदा।
बहुमूत्राल्पमूत्रश्च चिरं जीवति नो हयः॥ १५॥
विनतः पूर्वकायेन स्थूलजानुश्च यो हयः।
शूनाक्षिकूटस्त्वक्षाक्षः स्वल्पायुः स प्रकीर्त्तितः॥ १६॥

वयः।

लक्षणेनापि संयुक्ता वयोवृद्धास्तु वाजिनः।
नैव कार्य्यकरा येन ज्ञेयं तेषामतो वयः॥ १७॥
जातदन्तद्वयं बाल्ये पतत्यब्दे तृतीयके।
चतुरो दशनान् विन्द्याच्चतुर्थे पतितोत्थितान्॥ १८॥
पञ्चमे पतितोद्भूतान् षड् वदन्ति मनीषिणः।
षष्ठाष्टासु च सर्वेषु कालिकादिसमुद्भवः॥ १९॥
कालिका हरिणी शुक्ला काचा चैव समाक्षिका।
शङ्खा चैव क्रमेणाश्ववयसः परिसूचिका॥ २०॥

वक्रा तु कालिका रेखा कृष्णा दन्ताग्रसंस्थिता।
षष्ठे च सप्तमे वर्षे चाष्टमे च भवेत् क्रमात्॥ २१॥
सा पीता हरिणी ज्ञेया कालिका स्थानमाश्रिता।
नवमे दशमे वर्षे भवेदेकादशे तथा॥ २२॥
कृष्णा चैव भवेच्छुक्ला दन्तमूर्ध्नि समुद्भवा।
द्वादशाब्दं समारभ्य भवेद् यावच्चतुर्दश॥ २३॥
सिता सिद्धार्थकाकारा काचेति परिकीर्त्तिता।
पञ्चदशाब्दमारभ्य यावच्छप्तदशादितः॥ २४॥
माच्चिका माच्चिकाकारा भवेदष्टादशादिषु।
विंशत्यन्तेषु सर्व्वेषु वाजिनां दशनोद्भवः॥ २५॥
त्रयोविंशावसानेषु एकविंशादिषु त्रिषु।
शङ्खरूपा भवेच्छङ्खा पूर्व्वोक्तस्थानमाश्रिता॥ २६॥
छिद्रञ्च चलनं चैव तथा पातश्च यः स्मृतः।
नवाब्दतः क्रमाविद्याद्दशञ्चनं तुरगात् स्मृतम्॥ २७॥
अतिवद्धाः कषायाश्च तनवश्चैव ये द्विजाः।
ते भवन्ति द्विवर्षस्य शुक्लाश्चैवाब्दजन्मनः॥ २८॥
अखल्लशिरसः सूक्ष्मा भवन्त्यपतितोत्थिताः।
खल्लाग्रा विपुला दन्ता भवन्ति पतितोत्थिताः॥ २९॥
खल्लभागे विनापूर्णे व्यञ्जनानां न सम्भवाः।
पूर्णेषु खल्लभागेषु जायन्ते कालिकादयः॥ ३०॥
निम्नं कृष्णञ्च दन्ताग्रं खल्लमित्यभिधीयते।
पूर्णतां तस्य जानीयात् पञ्चात् प्रभृति वत्सरात्॥ ३१॥
खल्लेषु कालिकाभावा नात्र कार्य्या विजानता।
नियता कालिका रेखा सुपूर्णे दन्तमस्तके॥ ३२॥
द्वयोर्भवति षष्ठेऽब्दे चतुर्णां सप्तमे तथा।
पञ्चामष्टासु वर्षेषु दन्तानां कालिकाक्रमः॥ ३३॥

कालिकानुक्रमेणैव हरिण्यादिषु बुद्धिमान् ।
द्वौ द्वौ वर्षेण जानीयाद्वाजिनां व्यञ्जनं प्रति ॥ २४ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे आयुर्वयो-
ज्ञाने चतुर्थोऽध्यायः ।

---

## अथ पञ्चमोऽध्यायः ।

### दशाक्षेत्रविवरणम् ।

दशादशकमश्वानां जीवितं परिकीर्त्तितम् ।
प्रवरं वाजिनामेतद् ब्रह्मणा सृजता प्रजाः ॥ १ ॥
वासराः सप्ततिर्द्वौ च वर्षाणाञ्च तथा त्रयम् ।
दशाप्रमाणं वाहानां शालिहोत्रेण कीर्त्तितम् ॥ २ ॥
प्रथमे प्रथमा चैवं द्वितीया च द्वितीयके ।
दशा एवं क्रमेणैव भवेत् क्षेत्रफलप्रदा ॥ ३ ॥
अपानादौ ललाटे तु प्रथमं क्षेत्रमुच्यते ।
ललाटान्मस्तकं यावद् द्वितीयं समुदाहृतम् ॥ ४ ॥
ग्रीवास्कन्धावधिश्छिन्नं तृतीयं परिकीर्त्तितम् ।
उरोजन्तु तथांशे च ककुदं काकसं तथा ॥ ५ ॥
चतुर्थं विहितं चैवं पञ्चमं चांसकं भवेत् ।
कटिं वदन्ति षष्ठञ्च सप्तमं स्फिगुदाहृतम् ॥ ६ ॥
स्थुरकौ चाष्टमं चैवं जङ्घा च नवमं स्मृतम् ।
कूर्चसन्धिः खुरं चैव दशमं परिकीर्त्तितम् ॥ ७ ॥
एवं बुद्ध्वा भिषक् प्राज्ञः सदृशं फलमादिशेत् ।
क्षेत्रसाम्ये दशायास्तु वयोज्ञानपरायणः ॥ ८ ॥

ककुदावर्त्तिनोऽश्वस्य तथा शृङ्गान्वितस्य च।
सर्वकालं फलं दुष्टं दशा तत्र निरर्थका॥ ९॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे दशाविंशीये
पञ्चमोऽध्यायः।

---

## अथ षष्ठोऽध्यायः।

### जन्मदेशः।

अश्वानां जन्मदेशांस्तु प्रवक्ष्याम्यनुपूर्वशः।
उत्तमानाञ्च मध्यानां हीनानां यत्र सम्भवः॥ १॥
उत्तमास्ताजिकाः प्रोक्तास्तथा पारसिकाश्च ये।
केकाणाश्चैव ये वाहाः पृष्ठजा ये च कीर्त्तिताः॥ २॥
तुरी जाताश्च कीराश्च भूरुष्टा भाण्डजाश्च ये।
पार्वताः सैन्धवा मध्यास्तथा सारस्वता हयाः॥ ३॥
सम्भलाख्याः कुशाश्चैव जटदेशोद्भवाश्च ये।
अधमाष्टकृणैः सार्द्धं हये प्राग्दक्षिणोद्भवाः॥ ४॥
वृत्तदीर्घोच्छ्रितग्रीवा ह्रस्वकर्णा महाजवाः।
महाकाया महोरस्का निस्त्रासास्ताजिका मताः॥ ५॥
अत्यन्तविनतं येषां निर्मांसञ्च मुखं भवेत्।
पीनेन कटिदेशेन सुखवाश्च भवन्ति ते॥ ६॥
अश्वन्याश्च महासाराः संग्रामे चैव पूजिताः।
अपि शस्त्रहताङ्गाश्च नैव मुञ्चति सादिनम्॥ ७॥
पारसीकास्ताजिकाभा कोङ्काणाः केचिदुन्नताः।
स्थूलाः स्वल्पशरीराश्च प्रधाना दीर्घपृष्ठकाः॥ ८॥
केकणादेशजातानां मध्यमानाञ्च वाजिनाम्।

ताजिकैः सदृशं वक्त्रं बाहुल्येन विनिर्दिशेत् ॥ ९ ॥
सुवृत्तदेहस्तीच्णश्च सप्रमाणेन मध्यमः।
उरुजातः समुद्दिष्टः किञ्चित् स्थूलो मनोजवः ॥ १० ॥
अतिस्थूलोऽतितीच्णश्च ह्रस्वग्रीवस्तुरुस्तथा।
तुरुष्कः कीर्त्तितो वाजी स्थूलवक्रमुखश्च यः ॥ ११ ॥
केकनाकारदेहस्तु भवेन्माण्डविको हयः।
शान्त्या चैव प्रमाणेन केवलं नैव तत्समः ॥ १२ ॥
सिन्धुदेशोद्भवो वाजी पृष्ठन्यश्चारुकीरकः।
आननञ्चापि दीर्घञ्च तस्य पृष्ठं प्रकीर्त्तितम् ॥ १३ ॥
शक्त्या चैव जवेनापि रणशूरस्त्वजाघनः।
मादिभक्त्येच्छतो याति ताजिकादधिक स्तथा ॥ १४ ॥
परिमण्डलदेहास्तु तीच्णकर्णमुखा हयाः।
पक्कदेशोद्भवा दृष्टास्तथा सारस्वताश्च ये ॥ १५ ॥
लम्बकर्णोऽजटश्चैव अकुलः परिकीर्त्तितः।
सम्भलः श्लिष्टजानुश्च जटालश्चाकुलोपमः ॥ १६ ॥
वर्त्तुलश्चापि ह्रस्वश्च टङ्कणः परिकीर्त्तितः।
दाक्षिणात्यो भवेद् गुण्टो योऽधन्यः सर्ववाजिनाम् ॥ १७ ॥
जवहीना महादुष्टाः पूर्वदेशसमुद्भवाः।
वाजिवद्देशराणाञ्च देशं विन्द्याद्विचक्षणः ॥ १८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
जन्मदेशो षष्ठोऽध्यायः।

---

# अथ सप्तमोऽध्यायः ।

## वाहनविधाने

### विप्रादितद्वाहनविवरणम् ।

ब्रह्मणैव यथोद्दिष्टो वाहानां वाहने विधिः ।
सारन्तस्य समुद्धृत्य सर्वं तत्कथयाम्यहम् ॥ १ ॥
तुरङ्गवाहकस्यापि दोषस्य च गुणस्य च ।
विशेषन्तु विधानेन तत्सर्वं कथयाम्यहम् ॥ २ ॥
सत्वेन ज्ञायते जाती रूपेण तु च वाहयेत् ।
सामप्रधानं दण्डञ्च त्रिविधं विनियोजयेत् ॥ ३ ॥
त्रासी लुब्धो दयालुश्च विप्रः स परिकीर्त्तितः ।
शूरश्च दृढमन्युश्च क्षत्रियस्तुरगः स्मृतः ॥ ४ ॥
पापिनः कल्मषा रुक्षा दुष्टा वैश्याः प्रकीर्त्तिताः ।
विरूपा विषमाश्चैव शूद्राश्चण्डा उदाहृताः ॥ ५ ॥
ब्राह्मणान् शक्तिदानेन साम्ना चैव तु क्षत्रियान् ।
वैश्यं दण्डेन शब्देन शूद्रं दण्डेन वाहयेत् ॥ ६ ॥
प्रत्यूषे वाहयेद्विप्रं क्षत्रियं प्रहरे गते ।
वैश्यं सन्ध्यागते काले शूद्रं रात्रौ च वाहयेत् ॥ ७ ॥

### सत्वशक्तितद्वाहनविवरणम् ।

सत्वञ्च त्रिविधं प्रोक्तमुत्तमाधममध्यमम् ।
उत्तमञ्चोपशमेन साम्ना दण्डेन मध्यमम् ॥ ८ ॥
शब्दाङ्गेन च दण्डेन वाहयेदधमं बुधः ।
सहजे निर्मले वाहे तैलदुग्धस्य रूपवान् ॥ ९ ॥
शक्तिश्च द्विविधा प्रोक्ता बलदौर्बल्यसम्भवा ।
बलिष्ठो दुर्बलत्वेन दुर्बलोऽपि बलेन वा ॥ १० ॥

## रङ्गभूमिविवरणम्।

कुलेनौपाधिकायाश्च सत्वं ज्ञात्वा च वाहयेत्।
सान्द्रां सुकठिनाञ्चैव पाषाणोदकसंयुताम्॥ ११॥
तृणकाष्ठसमायुक्तां रङ्गभूमिन्तु वर्जयेत्।
समाञ्च विपुलाञ्चैव किञ्चित्पांशुसमन्विताम्॥
एकान्ते विजने रम्ये रङ्गभूमिन्तु कारयेत्॥ १२॥

## दोषगुणताड़नविवरणम्।

स्थूलः क्रोधी च मूर्खश्च चित्तोत्सुकचलासनः।
अस्थाने दण्डपाती च वाजी तस्य न सिध्यति॥ १३॥
प्रचलति यस्य कटिरूर्द्धं बाहुश्च दण्डवान्।
न तस्य वाहनं वाजी दुर्लक्ष्यं वाजिवाहितम्॥ १४॥
दृढ़ासनोऽथ तत्त्वज्ञो जितमुष्टिर्निरालसः।
अविरागी स्थिरश्चापि षड़ेते वाजिवाहकाः॥ १५॥
चित्तं यो नैव जानाति तुरङ्गस्य समासतः।
न वहन्ति हयास्तस्य दण्डपातेन ताड़िताः॥ १६॥
क्रोषिते बलिते भीते तथाचोन्मार्गगामिनि।
कुपितोद्भ्रान्तचित्ते वा षट्सु दण्डं निपातयेत्॥ १७
क्रोषिते ताड़येन्मूर्ध्नि जानुभ्यां बलिते तथा।
क्रुद्धे उरसि हन्तव्यो भ्रान्तचित्ते तथोदरे॥ १८॥
भीतश्च ताड़येत् पश्चात् मुखे चोन्मार्गगामिनम्।
ज्ञात्वा दोषञ्च रूपञ्च स्थानेष्वेतेषु ताड़येत्॥ १९॥
अस्थानताड़ितो वाजी यावज्जीवं न सिध्यति।
नो जहाति च तद्दोषं यावज्जीवत्यसौ हयः॥ २०॥
कुपिते पुच्छसंस्थाने भ्रान्तौ जानुद्वये तथा।
सर्वस्याप्राप्तदण्डस्य दण्डमेकं निपातयेत्॥ २१॥

अस्थाने ताड़ितो वाजी बह्वन् दोषानवाप्नुयात्।
तावद्भवन्ति ते दोषा यावज्जीवत्यसौ हयः॥ २२॥
अवाञ्छिता विनश्यन्ति सर्वकर्मक्षमा अपि।
कृशा व्याधिपरीताङ्गा जायन्तेऽत्यन्तवाहनात्॥ २३॥
पञ्च धाराः प्रवक्ष्यामि ऋषिभिर्याः प्रकीर्त्तिताः।
प्रथमा विक्रमा धारा द्वितीया पुलका स्मृता॥ २४॥
तृतीया पूर्णकण्ठी तु चतुर्थी त्वरिता स्मृता।
पञ्चमी चैव या धारा श्रूयते न च दृश्यते।
षष्ठी चैव तु या धारा निरालम्बा प्रकीर्त्तिता॥ २५॥
विक्रमा गतिधारा तु चतुःपादप्लुता स्मृता।
मुखपादसमायुक्ता पूर्णकण्ठी च या भवेत्॥ २६॥
स्वेच्छया त्वरिता धारा ताड़िता चैव पञ्चमी।
षष्ठी चैव तु या धारा स्वर्गलोकेषु तिष्ठति॥ २७॥
या सङ्ख्या रोमकूपानां वाहकस्य हयस्य च।
तावद्वर्षान् वसेत् स्वर्गे हयपृष्ठे हतो नरः॥ २८॥
यल्लोकं वाजिपृष्ठेषु हता गच्छन्ति मानवाः।
तं लोकं नाधिगच्छन्ति वड़वासु हताश्च ये॥ २९॥
वल्गाश्च संप्रवक्ष्यामि मुनिभिः परिकीर्त्तिताः।
पुष्पदन्ती च गोकर्णी तूलीलूला तुलोद्धृता॥ ३०॥
नागपीड़ी पुष्पधारी दुर्मुष्टी च रजस्तनी।
द्विहस्ती चैकहस्ती च शुभगा शोभना मता॥ ३१॥
इत्येता द्वादश वल्गा मुनिभिः परिकीर्त्तिताः।
आरूढ़ः कर्णमध्ये तु मनो लक्षति वाजिनः॥ ३२॥
शनैस्तु वाहयेत् पूर्वं पश्चात् पुलकमादिशेत्।
न वक्रो न तथोत्तानो न कुब्जो नाप्यधोमुखः॥ ३३॥
न भवेत् स्तब्धगात्रस्तु स भवेदश्ववाहकः।

स्थिरोरुः स्थिरपार्श्वश्च त्रिकोन्नतः स्थिरासनः॥ ३४॥
दक्षिणादितुरङ्गस्य चासने तु दृढ़ः सदा।
अश्ववाराः समाख्याताः शेषास्तु भयदायकाः॥ ३५॥
ग्रीष्मादिषु न कर्त्तव्यमृतुषु त्रिषु वाहनम्।
हेमन्तादिषु कर्त्तव्यं सादिभिः शास्त्रवेदिभिः॥ ३६॥
प्रतिपत्सु त्रयोदश्यां पञ्चम्यां वा सिते दले।
धृतिसिद्ध्यादियोगेषु वासरे चन्द्रसूर्य्ययोः॥ ३७॥
मूलरोहिणिहस्तेषु पुष्ये चैवोत्तरासु च।
एवंविधे दिने सादी वाहनं वाहयेत् शुभे॥ ३८॥
रङ्गभूमौ च रैवन्तं स्थापयेत् पूजयेत्ततः।
पुष्पैर्धूपैः प्रदीपैश्च चन्दनैः पायसैस्तथा॥ ३९॥
पक्वान्नैः पञ्चशब्दैश्च प्रातःशुचिः सुवाससः।
रक्ताम्बरधरो भूत्वा रक्तपुष्पधरस्तथा॥ ४०॥

ओं नमो रैवन्ताय अश्वहृदयाय ह्रीं क्लीं ओं नमोऽतिश्वेताय सौम्यरूपाय इमं मम अश्वं साधय साधय बन्धय बन्धय वश्यं कुरु कुरु महावीर्य्याय रैवन्ताय नमः॥ ४१॥

एतन्मन्त्रं जपेत्प्राज्ञो हयस्य दक्षिणे श्रुतौ।
एकविंशतिवारांश्च ततः पर्य्याणयेद्धयम्॥ ४२॥
क्षौमिकं तमारुह्य नयेद्वीथ्यां शनैः शनैः।
वल्गाग्रहश्च कर्त्तव्यः सव्यापसव्यमेव च॥ ४३॥
विक्रमा पुलका पूर्णकण्ठी च त्वरिता तथा।
खलीनादि प्रयोक्तव्यं सादिना वाजिनां क्रमात्॥ ४४॥
नातिस्थूलं कृशं नाति न स्तब्धं नातिकर्कशम्।
सप्ताङ्गुलप्रमाणन्तु खलीनं कारयेद्बुधः॥ ४५॥
खलीनादिषु लौहेषु धारासु विक्रमादिषु।
क्रमेणैव तुरङ्गाणां कटानि संप्रयोजयेत्॥ ४६॥

खलीनादौ च धारासु यदा सुशिक्षितो हयः।
तदा कटेषु तं सादी भ्रामयेद्विक्रमादिभिः॥ ४७॥
शतहस्तादिकां भूमिं सप्तहस्तावसानिकाम्।
भ्रामयेद्वाजिनं सादी सव्यं चैवापसव्यकम्॥ ४८॥
मण्डलं चतुरस्रञ्च गोमूत्रं चार्द्धचन्द्रकम्।
नागपाशक्रमेणैव भ्रामयेत् कटपञ्चकम्॥ ४९॥
एवमन्येषु लोहेषु त्रिष्वेव भ्रामयेत्कटे।
य एवं वाहयेद्वाहं तस्य कष्टं न जायते॥ ५०॥
दद्याद् भयमभीतस्य भीतस्यापि हरेद्भयम्।
रहस्यं सादिनामेतद्वाहनेऽस्मिन्निवेदितम्॥ ५१॥
पूर्वोक्तेषु च देशेषु षट्सु दोषेषु ताड़येत्।
न जातु सादिनान्यस्मिन् काले दोषशतैरपि॥ ५२॥
दम्यमानस्य वाहस्य यो दोषः सादिदोषतः।
जायतेऽसौ निराकर्त्तुं सादिना नैव शक्यते॥ ५३॥
एवं शास्त्रविधानेन यः सादी वाहयेद्धयान्।
हयस्तस्य सिध्यन्ति भवन्ति फलदायकाः॥ ५४॥
वाहनं सच्च दुष्टञ्च धूपालेपनमन्त्रकैः।
तदहं संप्रवक्ष्यामि मुनिभिः कीर्त्तितं यथा॥ ५५॥
अस्थिभिर्दशनैश्चैव तुकाणाञ्च तथा बुधैः।
विषमकरदंष्ट्राभिर्धूपमुक्तं हि सर्पिषा॥ ५६॥
एलागुरुमदोशीरनागकेसरचन्दनैः।
सर्जिकातैलसंयुक्तैर्धूपयेद्दुष्टवाजिनम्॥ ५७॥
विषलोहगदैलाभिस्तैलाज्यदधिचन्दनैः।
निःशेषदोषनाशाय धूपमुक्तं हि वाजिनाम्॥ ५८॥
विलिप्ता गोमयैः प्रातर्निशीथे सर्वसन्धिषु।
अष्टम्याञ्च विशेषेण दुष्टाः सिध्यन्ति धूपिताः॥ ५९॥

कासीसं चन्दनं कौन्तीसिद्धार्थमरिचानि च।
सैन्धवं वड़वामूत्रं गोमूत्रं कर्णज मलम्॥ ६० ॥
सुनिगुप्तानि पिष्टानि कषायासवचानि च।
अञ्जनं सर्वदुष्टानां देयं पर्वणि पर्वणि॥ ६१ ॥
अनेनाभ्यञ्जितो वाजी निर्वाणमधिगच्छति।
कोपं मोहं भयं त्यक्त्वा वश्यः स्यात् सादिनो भृशम्॥६२॥

## सादिकार्य्यविवरणम्।

प्रातः सादी शुचिः स्नातः शुक्लाम्बरधरस्तथा।
उपोषितो यतिर्भूत्वा जपेत्कर्णे च दक्षिणे॥ ६३ ॥
हयगन्धर्वराज त्वं शृणुष्व वचनं मम।
गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषणः॥ ६४ ॥
द्विजानां सत्यवाक्यानां सोमस्य गरुड़स्य च।
रुद्रस्य वरुणस्यैव पवनस्य बलेन च॥ ६५ ॥
हुताशनस्य दीप्तस्य स्मर जातिं तुरङ्गम।
स्मर राजेन्द्रपुत्रस्त्वं सत्यवाक्यमनुस्मर॥ ६६ ॥
स्मर त्वं वारुणीं कन्यां स्मर त्वं कौस्तुभं मणिम्।
क्षीरोदसागरे चैवमवमथ्य सुरासुरैः॥ ६७ ॥
तत्र देवकुले जातः स्ववाक्यं परिपालय।
कुले जातस्त्वमश्वानां मित्रं मे भव शाश्वतम्॥ ६८।
शृणु मित्र त्वमेतद्धि सिद्धो मे भव वाहनम्।
विजयेऽहं धराश्चैव संग्रामे सिद्धिमावह॥ ६९ ॥
तव पृष्ठं समारुह्य हता दैत्याः सुरैः पुरा।
अधुना त्वां समारुह्य जेष्यामि रिपुवाहिनीम्॥ ७० ॥
मन्त्रजापं ततः कृत्वा मन्त्रेणानेन बुद्धिमान्।
विसृज्य सर्वदेवांश्च ततः पर्य्याणयेद्धयम्॥ ७१ ॥

वाह्यागमेषु येऽभिज्ञाः कुर्वन्ति हरिवाहनम् ।
सुहृदस्ते च वाह्यानामन्ये तु हरिशत्रवः ॥ ७३ ॥

इति महासामन्तजयदत्तकृतेऽश्वशास्त्रे
वाहनविधौ सप्तमोऽध्यायः ।

---

## अथ अष्टमोऽध्यायः ।

### वन्ध्योपचारः ।

अथातः संप्रवक्ष्यामि वन्ध्याया गर्भधारणम् ।
शालिहोत्रादिभिः प्रोक्तं यथापूर्वं तपोधनैः ॥ १ ॥
घृतेन वड़वामादौ स्निग्धां पाणिन्तु वेधयेत् ।
ततो निरूहयेदश्वां यथाशास्त्रं विचक्षणः ॥ २ ॥
ततोऽनुवासयेत् प्राज्ञः सप्तरात्रन्तु वाहयेत् ।
कुड़वं विल्वचूर्णस्य माक्षिकं कुड़वद्वयम् ॥ ३ ॥
क्षीराढ़कं भिषग्दत्त्वा तैलप्रस्थं विपाचयेत् ।
मधुना मूर्च्छितं कृत्वा वैद्यस्तत्पाययेद्धयीम् ॥ ४ ॥
महास्नेहस्य प्रस्थांशं योन्यां वस्तिं प्रदापयेत् ।
सर्वं प्रवेशयेन्नेत्रं सम्पूर्णं द्वादशाङ्गुलम् ॥ ५ ॥
अपामार्गवचाविल्वशिग्रुवीजरसोनकैः ।
त्रिफला पिप्पली वाजिगन्धासर्षपसंयुतम् ॥ ६ ॥
सन्नीय भोजयेदश्वीं यावकं लवणाम्भसा ।
विल्वचूर्णयुतं दध्ना कृशरं पाययेत्ततः ॥ ७ ॥
मागधी त्रिफलाशिग्रुवीजापामार्गमुस्तकैः ।
सुचूर्णितैः पचेत्तैलं वचामरिचसर्षपैः ॥ ८ ॥
वस्तौ पानं प्रदातव्यं तैलमेतद्विचक्षणैः ।
यावकञ्च ततो देयमन्नं दधिसमन्वितम् ॥ ९ ॥

एवंविधैः प्रयोगैश्च बन्ध्या भवति गर्भिणी।
शीतपाक्यौ च मेदे च वृद्धे द्वे त्रिफला वचा॥ १०॥
क्वाथयेन्मतिमांस्तोये द्रोणे पादावशेषितम्।
कृत्वा संस्राव्य वस्त्राच्च देयं तत्र घृताढ़कम्॥ ११॥
बला चातिबला मेदे तथा चीरविदारिका।
जीवकर्षभकौ चैव यष्टीमधुकशारिवे॥ १२॥
चूर्णयित्वा क्षिपेत्तत्र शनैर्मृद्वग्निना पचेत्।
स्नेहानुवासनादेतद् बन्ध्यायाः स्यात् फलप्रदम्॥ १३॥
क्वाथं रौह्नीतकं चीरं माक्षिकं रोहिणीद्वयम्।
विड़ङ्गेन समालोड्य पाययेन्मतिमान् भिषक्॥ १४॥
एतैश्च पिण्डिकां कृत्वा योन्यां तस्याः प्रवेशयेत्।
ततः संयोजयेदश्वं पश्चात्तोयावगाहनम्॥ १५॥
कारयेन्मस्तकं चास्या अम्बुभिः परिषेचयेत्।
एवं गर्भं प्रगृह्णाति कर्त्तव्यो नात्र संशयः॥ १६॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे बन्ध्योपचारेऽष्टमोऽध्यायः।

---

## अथ नवमोऽध्यायः।

### गर्भज्ञानः।

अथातः संप्रवक्ष्यामि सगर्भायास्तु लक्षणम्।
योन्यां वीजग्रहे तृप्तिर्लोचनाविलता तथा॥ १॥
सगर्भा ताड़येदश्वं गर्भस्य परिलक्षणम्।
काचिन्मूका जड़ीभूता निर्विकारा त्यजेद् वृषम्॥ २॥
काचित् कण्डूयमानाश्वा गर्भिण्यपि प्रहर्षते।
काचिद्रागवशाद्वापि समूत्रा ताड़येद् वृषम्॥ ३॥

रुणद्धि परुषा काचिदश्वा पुच्छेन योनिकाम्।
विन्यस्तकर्णौ क्रोधाद्वा वृषं दृष्ट्वापसर्पिणी॥ ४॥
शूनाधो योनिभागा च सदा कान्तिविधारिणी।
प्रशस्तरन्ध्रा स्निग्धाङ्गी निविड़ोदरबन्धना॥ ५॥
गर्भोपलिप्तपार्श्वा च वड़वा गर्भिणी मता।
शरीरोपचयः शोभानिर्वृत्तिर्गतिमन्दता॥ ६॥
श्वासः स्वल्पाशनत्वञ्च शरीरस्य च पुष्टता।
स्निग्धता चैव रोमाणां घनरन्ध्रत्वमेव च॥ ७॥
क्षान्ता दान्ता प्रशान्ता च वृषं नेच्छति गर्भिणी।
प्रथमे च द्वितीये च मांसशोभा प्रजायते॥ ८॥
तृतीये च चतुर्थे च पञ्चमांसञ्च वर्द्धयेत्।
पञ्चमे चैव षष्ठे च त्वचि रोमं प्रसीदति॥ ९॥
सप्तमे वाष्टमे मासे योनिः सम्पद्यते: पृथुः।
पादाः श्रूयन्ति नवमे तस्याधश्चातिवर्द्धते॥ १०॥
दशमे चैकादशे वा द्वादशे वा प्रसूयते।
एवं नानाविधैर्ज्ञेया गर्भिणी हयकोविदैः॥ ११॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे गर्भज्ञाने
नवमोऽध्यायः।

---

## अथ दशमोऽध्यायः।

### सूतिकोपचारः।

गर्भन्तु निर्गतं ज्ञात्वा वारिणा परिषेचयेत्।
ऋतुं विज्ञाय मतिमान् शीतोष्णेन च वा पुनः॥ १॥
अथ मातुः स्तनौ धौतौ पाययेत् परिगृह्य तम्।
विलग्नेषु च गर्भेषु जरायुषु पतत्सु च॥ २॥

समान्येतानि मेधावी भेषजान्युपकल्पयेत्।
ज्योतिष्मती तेजवती शङ्खपुष्पी शतावरी ॥ ३ ॥
भार्गी वचा विशल्या च तथा लाङ्गलिकापि च।
एतत् संहृत्य सम्भारं ग्रन्थयेत् सर्षपैः सह ॥ ४ ॥
ततः शिरसि कण्ठे च पुच्छे चाप्युपयोजयेत्।
लाङ्गली बिल्वशुण्ठीनां चूर्णं तोयेन पाययेत् ॥ ५ ॥
एवं विमुच्यते गर्भो जरायूंषि पतन्ति च।
प्रतिपानैस्ततः कोष्ठं शोधयेद्वक्ष्यमाणकैः ॥ ६ ॥
सीधुमधु त्रिकटुकैः पूर्वाह्णे पाययेद्धयीम्।
पैष्टिकीं वा सुरां दद्याद् गुड़तैलेन संयुताम् ॥ ७ ॥
अश्वायै दापयेद् ग्रासं सुजीर्णे प्रतिपानके।
ततो न पाययेत् क्षीरमेकरात्रिं त्रिको विधिः ॥ ८ ॥
चतुर्थे दिवसे प्राप्ते तोयं चैव शृतं पिबेत्।
तदा न मुच्यते योन्या फेनं गर्भोदकन्तु वा ॥ ९ ॥
यस्माद्विमुक्तगर्भायाः कोष्ठे वायुरुदीर्य्यते।
तस्माद् घृतं प्रदातव्यं प्रसूतायां विजानता ॥ १० ॥
यवाः सर्वे हिता दूर्वा यावकं सर्पिषा सह।
दशमेऽहनि संप्राप्ते सवत्सां स्नापयेद्धयीम् ॥ ११ ॥
गन्धाद्यैः पूजयेत् पुष्पैर्गन्धधूपैश्च धूपयेत्।

## क्षीरशोधनम्।

अथ दुष्टस्य वक्ष्यामि क्षीरस्य परिशोधनम् ॥ १२ ॥
जम्बूकषायं क्षौद्रेण मिश्रितं पाययेद्धयीम्।
पद्मवल्कलमादाय क्षालितं जर्जरीकृतम् ॥ १३ ॥
वारिणा साधयेद्वैद्यो रात्रुग्रषितञ्च कारयेत्।
प्रभाते दापयेदश्वां शर्करा मधुमिश्रितम् ॥ १४ ॥
अजाजी भद्रमुस्ता च शृङ्गवेरञ्च सर्षपम्।

तुम्बुरूणि विडङ्गानि चित्रकं देवदारु च ॥ १५ ॥
पिप्पली च हरिद्रे द्वे पाठां शिग्रुञ्च पेषयेत्।
कल्कं सौवीरकेणैव सन्नीय प्रतिभोजयेत् ॥ १६ ॥
गुड़तैलसमायुक्तां तीच्णां वा पाययेत् सुराम्।
दुष्टस्य शोधना योगा चीरस्यैते विवर्द्धनाः ॥ १७ ॥

किशोरोपचारप्रकरणम्।

चौद्रञ्च नवनीतञ्च मिश्रितं लेहयेच्छिशुम्।
मासमेकं किशोरन्तु ततो भोजनमाचरेत् ॥ १८ ॥
गोधूमान्नं यवान्नञ्च सुसिद्धं पयसान्वितम्।
मधुसर्पिः समायुक्तं किशोराणां प्रशस्यते ॥ १९ ॥
तक्रं वा घृतसंयुक्तं मधुचीरविमिश्रितम्।
पाययेच्च किशोरांस्तु सद्योबलविवर्द्धनम् ॥ २० ॥
एवं किशोरा वर्द्धन्ते बलवन्तो भवन्ति च।
शरीरेन्द्रियधात्वग्निदोषाः प्रकृतयस्तथा ॥ २१ ॥
बलानाञ्च तुरङ्गाणां तुल्यरूपा भवन्ति ते।
तान्येव व्याधिरूपाणि तदेव तु चिकित्सितम् ॥ २२ ॥
स एव वातस्तत्पित्तं स श्लेष्मा तद्धि शोणितम्।
विशेषः केवलस्तत्र मात्रायाः परिकीर्त्तितः ॥ २३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
सूतिकोपचारे दशमोऽध्यायः।

---

## अथ एकादशोऽध्यायः।

### द्रव्यमात्राख्यानम्।

प्रधानमध्यहीनानां देशकालबलं प्रति।
वाजिनामुपयोगाय द्रव्यमात्रा विधीयते ॥ १ ॥

पञ्चगुञ्जाफलैर्माषो अष्टभिः परिकीर्त्तितः ।
माषैः षोडशभिः कर्षस्तैश्चतुर्भिः पलं भवेत् ॥ २ ॥
चतुःपलैः स्यात् कुड़वः प्रस्थः षोड़शभिः पलैः ।
चतुःषष्ट्या पलैरेक आढ़कः परिकीर्त्तितः ॥ ३ ॥
शतद्वयं पलानान्तु षट्पञ्चाशत्तथैव च ।
द्रोणस्य कीर्त्तिता संख्या प्रमाणज्ञानकोविदैः ॥ ४ ॥
शुष्कद्रव्यस्य या मात्रा सा द्रवे द्विगुणा भवेत् ।
मूलादीनामशुष्काणां द्रव्यतुल्यो विधिः स्मृतः ॥ ५ ॥
एकस्मिन्नेव दातव्यं दिने वाहस्य निस्तुषैः ।
अविनष्टैर्यवैः पूर्णमाढ़कानां चतुष्टयम् ॥ ६ ॥
उत्तमाधमहीनानां पादहीनन्तु दापयेत् ।
पादो न आढ़को देयः सुसिद्धो भोजने तथा ॥ ७ ॥
शालेश्च तण्डुलानां तु अर्द्धञ्चैव प्रदापयेत् ।
कनीयसोऽर्द्धहीनञ्चेदिति मानं शरीरिणाम् ॥ ८ ॥
चणकाश्चैव माषाश्च ये चान्ये व्रीहयस्तथा ।
यवार्द्धेन प्रयोक्तव्या देशसात्म्येन खादने ॥ ९ ॥
मुद्गप्रस्थास्त्रयो योज्या वाजिनां मुद्गभोजने ।
त्रयश्च स्नेहकुड़वा एकश्च लवणस्य तु ॥ १० ॥
तत्प्रमाणेन तैलेन लवणेन तथैव च ।
माषा मुद्गसमा देया भोजनाय च वाजिनाम् ॥ ११ ॥
सर्पिषश्चापि पानार्थं प्रस्थं दद्याद्विचक्षणः ।
मधुनः कुड़वं चापि फाणितस्य तथैव च ॥ १२ ॥
शर्कराञ्चैव खण्डञ्च तथा मत्स्यण्डिकामपि ।
फाणितस्य प्रमाणेन दापयेन्मनिमान् भिषक् ॥ १३ ॥
अर्द्धप्रस्थन्तु तैलस्य पलान्यष्टौ गुड़स्य च ।
प्रतिपाने सुरायाश्च प्रस्थमेकं प्रदापयेत् ॥ १४ ॥

चूर्णं च लवणं पिण्डीं पलैकाञ्चैव बुद्धिमान् ।
चतुःपलं घृताद्दद्यात्स्नेहे पाने च भोजने ॥ १५ ॥
पलानि दश कल्कस्य निरूहे संप्रदापयेत् ।
आढ़कञ्च कषायस्य दद्याद् बुद्धिमतां वरः ॥ १६ ॥
तावत् प्रमाणं क्षीरञ्च क्षीरवस्तौ प्रकीर्त्तितम् ।
स्नेहप्रस्थः प्रदातव्यो निरूहे चैव वाजिनाम् ॥ १७ ॥
अभ्यङ्गं कारयेत्तावत् यावद्विन्दोश्च्युतिर्भवेत् ।
कषाय प्रतिपानार्थे द्वौ प्रस्थौ परिकीर्त्तितौ ॥ १८ ॥
प्रतिपानात्पलं यूषं द्विगुणञ्चैव दापयेत् ।
अर्द्धाढ़कञ्च दातव्यो रसश्चेक्षोर्विचक्षणैः ॥ १९ ॥
पेयार्थे तण्डुलप्रस्थो यवागूर्द्विगुणेन तु ।
भोजितस्यानुपानाय सुराप्रस्थः प्रकीर्त्तितः ॥ २० ॥
दापयेत्तण्डुलप्रस्थं तण्डुलोदककर्मणि ।
यवागूमण्डकल्केन दद्याद्वै तण्डुलोदकम् ॥ २१ ॥
द्वौ प्रस्थौ शक्तुकानान्तु शक्तुपाने प्रदापयेत् ।
गुड़स्य च पलान्यष्टौ आढ़कञ्चैव वारिणः ॥ २२ ॥
इक्षोरससमं देयं पानार्थे च गुड़ोदकम् ।
प्रतिपाने पलं देयं द्रव्याणां सुरया सह ॥ २३ ॥
स्नेहस्य कुड़वश्चैव नस्यार्थे परिकीर्त्तितः ।
भेदनीये च तीक्ष्णे च पादोनं संप्रदापयेत् ॥ २४ ॥
कर्णयोः पूरणे स्नेहो भवेन्नावनसम्मितः ।
शिरोविरेके दातव्यमर्द्धन्तु कुड़वस्य वै ॥ २५ ॥
औषधस्य पलं देयं हिङ्गोरेकश्च माषकः ।
नस्यप्रदाने चाश्वस्य कर्षमेकं प्रदापयेत् ॥ २६ ॥
धूपे चूर्णं त्रयः कर्षा घृतकर्षश्च सौरभः ।
अनिर्दिष्टकषायस्तु पादशेषः प्रकीर्त्तितः ॥ २७ ॥

निर्विशेषप्रमाणानां द्रव्याणां पलमादिशेत्।
रुधिरस्याढ़को देयः पानार्थं यत्र युज्यते॥ २८॥
विंशतिस्त्रिगुणाश्चैव वारिमानं प्रकीर्त्तिताः।
अनुपानं तथाशीतिशतं जाङ्गलचारिणाम्॥ २९॥
मांसानां दापयेत् सम्यक् पलसङ्ख्यामिमां बुधः।
रसके भोजने देयं वाजिनां हितकाम्यया॥ ३०॥
शिशुमारोद्रकुम्भीरगोधामण्डूककर्कटाः।
शङ्खकच्छपशुक्त्याद्याः कीर्त्तिता जलजन्तवः॥ ३१॥
गवयो गण्डको हस्ती शूकरो महिषो रुरुः।
आनूपाः कथिता ह्येते ये चान्येऽनूपवासिनः॥ ३२॥
कृष्णसारशशद्वीपिच्छागसिंहतरक्षवः।
सम्बरेणकनीलाण्डवृषभोष्ट्राविकैड़काः॥ ३३॥
जाङ्गलाः पशवः प्रोक्ता ये चान्ये स्थलवासिनः।
शशोऽतिलघुरेतेषां गुरुश्चैवाविकस्तथा॥ ३४॥
जम्बूवेतसहिन्तालकदलीनलवेणुभिः।
युक्तो बहुजलो निम्नो देशोऽनूप उदाहृतः॥ ३५॥
कशेरुकशमीपीलु करीरद्रुमशङ्करैः।
खदिरैश्चापि संयुक्तास्तथा च वकुलैर्युतः॥ ३६॥
जलहीनस्थलीप्रायो देशो जाङ्गल उच्यते।
साधारणा द्विरूपस्थास्तज्जाः साधारणा मृगाः॥ ३७॥
तेषां मांसप्रयोगे तु मात्रा साधारणा स्मृता।
पशवः पक्षिणश्चापि ज्ञेया देशसमाः सदा॥ ३८॥
वारिजा गुरवः स्निग्धा वातघ्नाः श्लेष्मशुक्रलाः।
आनूपा वारिजैस्तुल्या किञ्चिच्च लघवः स्मृताः॥ ३९॥
त्रिदोषशमना बल्या जाङ्गला मृगपक्षिणः।
अनभिष्यन्दिनो हृद्याः कायाग्नेश्चापि रोचिनः॥ ४०॥

साधारणाः समुद्भूता ज्ञेयाः साधारणाः सदा।
रसवीर्य्यविपाकाश्च तेषां साधारणा मताः॥ ४१॥
कल्काच्चतुर्गुणः स्नेहः स्नेहात् क्वाथश्चतुर्गुणः।
स्नेहपाके विधिश्चायं समानः परिकीर्त्तितः॥ ४२॥
स्नेहकल्की यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत्।
वह्नौ क्षिप्ते च नोशब्दस्तदा सिद्धिं विनिर्दिशेत्॥ ४३॥
व्रणे नस्ये तथा वस्तौ मृदुपाकः प्रकीर्त्तितः।
अभ्यङ्गे मध्यपाकस्तु पाने किञ्चिद्वरो भवेत्॥ ४४॥
मध्यमोत्तमहीनानामेवमेव विचक्षणः।
वयोऽनुरूपद्रव्याणि दापयेच्च शरीरतः॥ ४५॥
वर्षजाते भवेत्पादो द्वौ पादौ च द्विहायने।
त्रयस्त्रिहायने देयाः पूर्णं दद्यात्ततः परम्॥ ४६॥
कृशे चाल्पप्रमाणे च दद्यान्मात्रां कनीयसीम्।
महाकाये तथा स्थूले प्रयोज्या मध्यमोत्तमाः॥ ४७॥
क्वाथपानप्रलेपेषु वाह्यो चापि तपोधनैः।
अनिर्दिष्टे जलं प्रोक्तं लवणञ्चैव सैन्धवम्॥ ४८॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
द्रव्यमात्राज्ञाने एकादशोऽध्यायः।

---

## अथ द्वादशोऽध्यायः।

### निघण्टुः।

निघण्टुं संप्रवक्ष्यामि पूर्वशास्त्रानुसारतः।
द्रव्याणामवबोधस्तु येन सम्यक् प्रजायते॥ १॥
वत्सादनी छिन्नरुहा गुडूची तन्त्रिकामृता।

वृषो वासाटरूषश्च वासकः परिकीर्त्तितः॥ २॥
कुरुविन्दं घनं मुस्तं मेघाख्यं नागकेशरम्।
उदीच्यो जलनामा च वर्हिरिष्टश्च बालकः॥ ३॥
उरुवूको व्याघ्रदलस्तथा गन्धर्वहस्तकः।
एरण्डः कीर्त्तितो वैद्यैर्वातारिश्च विशेषतः॥ ४॥
ब्रह्मदण्डी च भार्गी च तथा च द्विजयष्टिका।
मकूलोदुम्बरदला दन्ती प्रोक्ता निकुम्भिका॥ ५॥
एकाष्ठीला स्मृता पाठा अम्बष्ठा च प्रकीर्त्तिता।
उषणा चविका चव्या अजमोदा च दीप्यकः॥ ६॥
जिङ्गी च विकसा वापि मञ्जिष्ठा परिकीर्त्तिता।
अनन्ता सारिवा गोपी रक्ता देवीलता लघुः॥ ७॥
मृद्वीका गोस्तनी द्राक्षा कच्छुरा च शठी स्मृता।
श्रीवेष्टकं दधिकं स्यात्सुरभी शल्लकी सुधा॥ ८॥
कच्छुरा ताम्रपुष्पी च नादेयी भूमिजम्बुका।
अश्वत्थः पिप्पली बोधिर्न्यग्रोधो बहुपादटः॥ ९॥
उदुम्बरस्तु यज्ञाङ्गो गर्दभाण्डः कपीतनः।
पाषाणभेदो विख्यातः शिलाभेदोऽश्मभेदकः॥ १०॥
वृक्षादनी च वन्दाकी सुरसा तुलसी स्मृता।
राक्षसी चैव चण्डा च चोरपुष्पाभिधीयते॥ ११॥
अगुरुर्लोहसंज्ञस्तु राजार्हश्चापि कीर्त्तितः।
यवानिका तु भूतीका, खदिरं दन्तधावनम्॥ १२॥
नलदा चैव मांसीतु हेमाख्यं नागकेशरम्।
गोधावती च सुवहा, गुन्द्रस्तेजनकः शरः॥ १३॥
चूड़ाला चक्रला चैव उच्चटा परिकीर्त्तिता।
वीजं कुटजवृक्षस्य कीर्त्तितं मुनिभिः पुरा॥ १४॥
कलिङ्गेन्द्रयवाह्वन्तु वसुको वसुहट्टकः।

त्रुटिर्वयस्था सूक्ष्मैला स्थूलैला तालकाफलम् ॥ १५ ॥
अक्षीवश्चाक्षकश्चैव अजकः परिकीर्त्तितः।
युग्मपत्रः कोविदारः कुरवः कोकिलाक्षकः ॥ १६ ॥
शिग्रुः शोभाञ्जनः प्रोक्तस्तत्फलं मरिचं सितम्।
अतिपत्रा महापत्रा सूक्ष्मपत्रा बला स्मृता ॥ १७ ॥
समङ्गा वाधपुष्पी च वातला वाथ कादली।
महाद्रुमश्च वज्री च स्नुहा चैव स्नुही स्मृता ॥ १८ ॥
अर्कस्य रविनामानि विज्ञेयानि विचक्षणैः।
धत्तूरः काञ्चनः प्रोक्तस्तथाचोन्मत्तकः स्मृतः ॥ १९ ॥
करवीरोऽश्वमारश्च चित्रको वह्निसंज्ञकः।
कोषातकी महाजाली देवदाली च कीर्त्तिता ॥ २० ॥
धामार्गवश्च विख्यातो घोषा चेति च सूरिभिः।
आरग्वधः कृतमालो व्याधिघ्नश्चतुरङ्गुलः ॥ २१ ॥
मार्जनस्तिल्वकश्चैव सावरो लोध्र उच्यते।
नक्तमालः करञ्जश्च चिरविल्वः प्रकीर्त्तितः ॥ २२ ॥
पूतीकरञ्जः पूतीकः प्रकीर्य्यः कलिमारकः।
कपित्थस्तु दधित्थः स्यान्मालूरो विल्व उच्यते ॥ २३ ॥
झाटलो मुष्ककः प्रोक्तस्तथा वै घण्टकः स्मृतः।
वृक्षको वत्सकश्चैव कुटजो गिरिमल्लिका ॥ २४ ॥
वीजको वीजपूरश्च मातुलुङ्गश्च पूरकः।
कदली कीर्त्तिता रम्भा हरिद्रा रात्रिनामिका ॥ २५ ॥
द्रवन्ती चैव चित्रा च तथा मूषकपर्णिका।
सर्वानुभूतिः सरला त्रिवृता कालमेषिका ॥ २६ ॥
मसूरविदला वापि त्रिवृत्प्रोक्ता त्रिकण्टका।
यष्टिका त्रिदला रूपं क्लीतकं मधुयष्टिका ॥ २७ ॥
यष्ट्याह्वं मधुकश्चैव कीर्त्तितं शास्त्रशालिभिः।

हैमवत्युग्रगन्धा च षड्ग्रन्था च वचा स्मृता ॥ २८ ॥
अकुलादन्यरिष्टा च कटुका कटुरोहिणी।
फलिनी च प्रियङ्गुः स्यात् विष्वक्सेना च कीर्त्तिता ॥२९॥
यवासो धन्वयासश्च दुस्पर्शा च दुरालभा।
श्वेतभण्डा च खुरिका शारदी गिरिकर्णिका ॥ ३० ॥
अपराजिता समुद्दिष्टा वेणुर्वंशश्च कीर्त्तितः।
शङ्खिणी तिक्तला प्रोक्ता, सप्तला चर्मकारिका ॥ ३१ ॥
ऋषभः स्यादृषभको जीवकः कूर्चशीर्षकः।
शीतपाकी च काकोली माषपर्णी महासहा ॥ ३२ ॥
मुद्गपर्णी क्षुद्रसहा, पयस्यादित्यपुष्पिका।
चीरिका राजवृक्षश्च तथा वै पार्थिवादनी ॥ ३३ ॥
शालपर्ण्यंशुमती स्यात्तथा चापि स्थिरा ध्रुवा।
पृश्निपर्णी पृथक्पर्णी कलशी धावनी गुहा ॥ ३४ ॥
वार्त्ताकी वृहती सिंही भाण्टाकी दुष्प्रधर्षणी।
निर्दिग्धिका स्पृशा व्याघ्री क्षुद्रिका कण्टकारिका ॥ ३५ ॥
राटं पिण्डीतकं गोलं श्वसनं मदनं फलम्।
लामज्जको मृणालश्च सेव्यश्चोशीर उच्यते ॥ ३६ ॥
पलङ्कषा च चित्रांशुर्गुग्गुलुः कौशिकः पुरः।
श्योणाको दीर्घवृन्तश्च कटूङ्गश्चैव टुण्टुकः ॥ ३७ ॥
काको दुम्बरिका फल्गुर्मलपूर्ज घने फला।
हरिवालं सुगन्धश्च ऐलेयं चैलवालुकम् ॥ ३८ ॥
वक्रं नतञ्च तगरं जिम्मं कालानुशारिवा।
अभीरुर्बहुपुत्री च तथा मूला शतावरी ॥ ३९ ॥
दूर्वा सहस्रवीर्य्या स्याच्छतवीर्य्या तु सा मता।
छत्रा मधुरिका प्रोक्ता मिषिर्माङ्गलिका च सा ॥ ४० ॥
भरद्वाजी च कार्पासी शृङ्गी कर्कटशृङ्गिका।

कुटन्नटश्च धन्यश्च प्लवश्च परिपेलवम् ॥ ४१ ॥
गोकण्टको गोक्षुरकः खरदंष्ट्रा त्रिकण्टकः।
बिम्बी रक्तफला प्रोक्ता तथा रक्तोष्ठका मता ॥ ४२ ॥
सैरीयकः सहचरी वाणा दासी कुरुण्टका।
कुस्तुम्बुरुश्च धन्याको गोलोमी भूतकेशिका ॥ ४३ ॥
श्रेयसी चैव चण्डा च रास्ना च परिकीर्त्तिता।
अर्जुनः ककुभः पार्थः चौरहृचो धनञ्जयः ॥ ४४ ॥
चिरञ्जीवी च मधुरः प्रियको जीवको मतः।
ज्योतिष्मती हैमवती तेजोवत्यप्युदाहृता ॥ ४५ ॥
कुठेरकोऽर्जकश्चैव पर्णासः परिकीर्त्तितः।
ब्रह्मपुष्पः फणिज्झस्तु, तर्कारी वैजयन्तिका ॥ ४६ ॥
त्रायमाणा सहत्राणी कोलवल्ली च पिप्पली।
नीलिनी चैव नीली स्यात् सोमराजी च वाकुची ॥ ४७ ॥
रोहीतकः प्लीहशत्रुः, वातपोथस्तु किंशुकः।
सर्पदंष्ट्रा वृश्चिकाली आस्फोता वनमालिका ॥ ४८ ॥
चित्रा गवाची गोडुम्बी सुषवी कारवेल्लिका।
मार्कवो भृङ्गराजः स्यात् सुनिषण्णं चिक्रतकम् ॥ ४९ ॥
काला गृध्रनखी हिंस्रा सर्पगन्धा तु नाकुली।
कटुम्बरा प्रसारणी गोजिह्वा दर्विपत्रिका ॥ ५० ॥
महौषधं शृङ्गवेरं नागरं विश्वभेषजम्।
मागधी चोपकुल्या च वैदेही पिप्पली कणा ॥ ५१ ॥
शितोपला शिता चापि शर्करा परिकीर्त्तिता।
विशेषौ द्वौ तु खण्डस्य मत्स्यण्डी फाणितौ समौ ॥ ५२ ॥
गुटिको मिषरो मत्स्यो मत्स्यण्डी परिकीर्त्तितः।
फाणितस्तद्द्रवश्चापि विहितो मुनिपुङ्गवैः ॥ ५३ ॥
हरीतक्यभया पथ्या अमोघा चाव्यथा शिवा।

धात्री चामलकी प्रोक्ता विभीतोऽक्षः कलिद्रुमः॥ ५४॥
जन्तुकं रामठं हिङ्गु वेलनं परिपोषणम्।
जरणो जीरकोऽजाजी कारवी कृष्णजीरकः॥ ५५॥
भद्रं श्रीचन्दनं श्वेतं कर्पूरं चन्द्रनामकम्।
किराततिक्तं भूनिम्बं चौद्रं पुष्परसो मधु॥ ५६॥
प्रसन्ना मदिरा कल्या गौड़ी शुण्डी सुधा सुरा।
अवन्ती सैव धान्याम्लः काञ्जिकश्चारणालकः॥ ५७॥
उदश्विन्मथितं चैव तक्रं घोलं प्रकीर्त्तितम्।
दधिमण्डं स्मृतं मस्तु मनाग् जातन्तु मण्डकम्॥ ५८॥
प्रपौण्डरीकं श्रीपुष्पं सैन्धवं लवणोत्तमम्।
कापोतः सर्जिकाक्षारो यवक्षारो यवाग्रजः॥ ५९॥
मनःशिला तु वैगन्धिर्हरिता नटमण्डनम्।
सौवर्चलन्तु रुचकं गन्धाश्मा तु बलीयसी॥ ६०॥
हरेणुर्ब्राह्मणी कौन्ती रोहिषं रक्तचित्रकम्।
शरणं क्रियते कर्म चण्डालैर्येन सर्वदा॥ ६१॥
तं प्राहुर्मुनयो गव्यं मधूच्छिष्टन्तु सिक्थकम्।
अजस्तुमा रुद्रवन्ती कलायस्तु हरेणुका॥ ६२॥
अपामार्गः शैखरिकः प्रत्यक्पुष्पी मयूरकः।
पुनर्णवा तु वर्षाभूः शोतघ्नी प्रावृषायणी॥ ६३॥
वृश्चिका श्वेतनामा स्याद् रक्तनामा कठिल्लिका।
इन्द्राणी इन्द्रसुरसा निर्गुण्डी सिन्धुवारिका॥ ६४॥
शूकशिम्बात्मगुप्ता च कपिकच्छुर्महर्षभी।
इक्ष्वाकुः कटुतुम्बी स्यात्तिक्तालावूनृपात्मजा॥ ६५॥
वैकङ्कतो मधुपर्णी स्निग्धा तु स्वादुकण्टकः।
वञ्जुलो निचुलः शीतो जलकासश्च वेतसः॥ ६६॥
वारिजो निचुलश्चैव हिज्जलः परिकीर्त्तितः।

चिञ्चा तिन्तिलिका प्रोक्ता फेनिलश्चाप्यरिष्टकः ॥ ६७ ॥
काश्मरी सर्वतोभद्रा श्रीपर्णी भद्रपर्णिका ।
शेलुः श्लेष्मान्तकः शीत उद्दालो बहुवारकः ॥ ६८ ॥
बिल्वकाश्मर्य्यश्योणाकपाटलागणिकारिकाः ।
पञ्चमूलं स्मृतं श्रेष्ठं शास्त्रमार्गानुसारिभिः ॥ ६९ ॥
गोक्षुरो वृहती चैव शालपर्णी निदिग्धिका ।
पञ्चमूलं भवेत् सूक्ष्मं पृश्निपर्णी समायुतम् ॥ ७० ॥
पञ्चमूलोभयञ्चैव दशमूलमिति स्मृतम् ।
सन्निपातभवे रोगे हितमेतत् प्रकीर्त्तितम् ॥ ७१ ॥
मरिचस्य च शुण्ठ्याश्च पिप्पलीनां तथैव च ।
एतत्त्रिकटुकं प्रोक्तं व्योषाख्यं त्र्यूषणं तथा ॥ ७२ ॥
त्वगेलापत्रसंयोगे त्रिसुगन्धि त्रिजातकम् ।
नागकेसरसंयुक्तं चातुर्जातकमुच्यते ॥ ७३ ॥
लवणैः कटुचूर्णैश्च घृष्यते यद्‌ व्रणं बुधैः ।
प्रतिसारं ततः प्रोक्तं वाजिशास्त्रविशारदैः ॥ ७४ ॥
अनुवासनसंज्ञौ तु निरूहास्थापने स्मृतौ ।
वस्तिसंज्ञा समुद्दिष्टा एषामेव तपोधनैः ॥ ७५ ॥
घ्राणमार्गेण यच्चूर्णं प्रेर्य्यते मुखवायुना ।
प्रधमनं तद्विख्यातं धावनं चालनं स्मृतम् ॥ ७६ ॥
काष्ठाहारिकगोपालमालाकारवनेचरान् ।
दृष्ट्वा नामानि जानीयात् भेषजानां विचक्षणः ॥ ७७ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
निघण्टौ द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः।

### ऋतुविभागविवरणम्।

स्वस्थवृत्तं प्रवक्ष्यामि तुरगाणां समासतः।
शालिहोत्रादिभिः प्रोक्तं यथा सम्यक् प्रकीर्त्तितम् ॥ १ ॥
श्रावणश्च तथा भाद्रो द्वौ मासौ ऋतुवर्षकौ।
आश्विनः कार्त्तिकश्चैव शरत्कालः प्रकीर्त्तितः ॥ २ ॥
मार्गपौषौ तु हेमन्तः शिशिरो माघफाल्गुनौ।
वसन्तश्चैत्रवैशाखौ ग्रीष्मो ज्येष्ठः शुचिस्तथा ॥ ३ ॥

### शालानिर्माणविवरणम्।

प्रागुदक्प्रणते देशे स्थाणुकण्टकवर्जिते।
चिताचैत्यविहीने च शालां कुर्वीत पण्डितः ॥ ४ ॥
शुष्का शाला च कर्त्तव्या इष्टकाष्ठेन संस्थिता।
शिरसि स्थापयेद्देवं रैवन्तं पूजयेत् सदा ॥ ५ ॥
कार्य्या त्रिहस्तविस्तीर्णा लाच्चायाः पिण्डिका शुभा।
शालाप्रमाणदीर्घा च तस्यां वासं प्रदापयेत् ॥ ६ ॥
द्वौ हस्तावुच्छ्रयेणास्या मानञ्चैव प्रकीर्त्तितम्।
तर्ज्जकं काष्ठदण्डांश्च प्रान्तेऽस्याः स्थापयेद्बहिः ॥ ७ ॥
अग्निकार्य्यं ततः कृत्वा द्विजान् संभोज्य चादरात्।
कृत्वा पुण्याहवादित्रं ततो वाहान् निवेशयेत् ॥ ८ ॥
सम्मुखान् स्थापयेत्तांस्तु पुष्पगन्धादिपूजितान्।
रज्जुद्वयनिबद्धांश्च पश्चात्पाशेन संयुतान् ॥ ९ ॥
लौहञ्च निम्बपत्राणि गुग्गुलं सर्षपान् घृतम्।
चैलबद्धं वचां हिङ्गुं बध्नीयाद्वाजिपुच्छके ॥ १० ॥
समीपे वानरः कार्य्यः वाजिनां नित्यतो बहिः।

सवत्सो वृषभश्चैव शुक्रो यश्चापि कुक्कुरः॥ ११॥
शालापार्श्वे कुटीं कृत्वा स्थापयेत् सर्वभेषजम्।
घृततैलानि पक्वानि पुटकां नालिकां तथा॥ १२॥
आलोकं कारयेत्प्राज्ञः प्रदीपैः सर्वरात्रिकैः।
जाग्रतः पुरुषास्तत्र तिष्ठेयुः शस्त्रपाणयः॥ १३॥
वालुकापूरितं कार्य्यं संस्कृतं चत्वरं तथा।
लुठनाय च वाहानां भवेच्च क्रमणाय च॥ १४॥

वर्षापोषणविवरणम्।

शालाप्रविष्टमात्रस्य नैव कार्य्यः क्रियाक्रमः।
दशाहं द्वादशाहं वा पथ्या तैलेन संयुता॥ १५॥
ततो निम्बः प्रदातव्यो वर्षादौ पलपञ्चकः।
सप्ताहमुत्तमाश्वाय शुण्ठीदीप्यकसैन्धवैः॥ १६॥
स्वस्थं बुद्ध्वा ततो वाहं दद्याद् गोमूत्रसंयुतम्।
हरीतकीपलं चैव कटुतैलेन मूर्च्छितम्॥ १७॥
आदौ पञ्च प्रदातव्या हरीतक्यो विजानता।
पञ्च पञ्च च वृद्धायां यावत् पूर्णं शतं भवेत्॥ १८॥
उत्तमाश्वे शतं प्रोक्तमशीतिर्मध्यमे तथा।
अधमे विहिता षष्टिरश्वज्ञानपरायणैः॥ १९॥
मासे भाद्रपदे विद्वान् समानीय हरीतकीम्।
दशाहं केवलं तस्मै घासं दद्यात् समाहितः॥ २०॥
कल्पोक्तेन विधानेन यथामात्रं यथाबलम्।
रसोनं गुग्गुलुञ्चापि प्रदद्याद्वाजिनां ततः॥ २१॥
प्रथमे प्रहरे चैव वर्षाकाले न चारयेत्।
द्वितीये च तृतीये च चारयेन्न तु पश्चिमे॥ २२॥
प्रभाते निस्तुषा देया यवा मध्यदिने तथा।
सन्ध्याकाले भिषक् प्राज्ञः पुनश्चैवावचारयेत्॥ २३॥

दुर्दिने नोदकं देयं वाहेभ्यो दापयेद् बुधः।
दिवसस्याष्टमे भागे भोजनस्य भवेद्विधिः॥ २४॥
तस्य पानं प्रयोगश्च पूर्वाह्ने चैव कीर्त्तितम्।
पिप्पली शृङ्गवेरेण चित्रकेण समाह्वया॥ २५॥
लवणैः सुरया सार्द्धं प्रतिपानं घनागमे।

## शरत्पोषणविवरणम्।

शरदाद्याश्विने मासेऽश्वानो कारयेत् श्रमम्।
ग्रामैर्यवैश्च तत्प्राज्ञः केवलैः पोषयेद्भिषक्॥ २६॥
ताड़ागं शस्यते तोयं पाने चैवावगाहने।
सन्तप्तस्य तु कर्त्तव्यं चीरवस्तिक्रमो बुधैः॥ २७॥
निस्तुषा जलकुम्भस्था यवास्तस्मै हिता स्मृताः।
औदकाश्च यवाः प्रोक्ता रक्तपित्तप्रशामकाः॥ २८॥
काश्मर्य्याश्च फलं मुस्तं वदरं कटुरोहिणी।
उशीरं शर्कराश्चैव प्रियङ्गु मधुके तथा॥ २९॥
पटोलं त्रायमाणाश्च एकादश भवेन्मधु।
एकादशाङ्गमित्युक्तं सीधुना संप्रदापयेत्॥ ३०॥
अत्यन्तश्वासतप्तानां प्रतिपानन्तु वाजिनाम्।
चन्दनोशीरकल्कैश्च सान्द्रं वा लेपनं हितम्॥ ३१॥
सुशीतञ्च प्रवातञ्च स्थानं तेषां प्रकीर्त्तितम्।
व्यजनं तालवृन्तैश्च विस्तीर्णेऽम्भसि मज्जनम्॥ ३२॥
देयं शरदि चाश्वाय भोजनं चीरशालिभिः।
मांसयूषैरनम्लैर्वा किञ्चित् सैन्धवसंयुतैः॥ ३३॥
शुक्लपक्षे द्वितीयायां शालां संवेश्य रक्षयेत्।
आदित्यरश्मितो वाहान् कटैर्वस्त्रादिभिस्तथा॥ ३४॥
अस्तं गते दिनकरे कटादीन्यपकर्षयेत्।
प्रवातार्थं पुनर्दद्याद् यावत् सन्ध्या न जायते॥ ३५॥

धूपो निम्बदलैः कार्य्यो घृतगुग्गुलुसंयुतैः ।
शालाप्रवेशविहितान् रक्षकांश्चैव दापयेत् ॥ ३६ ॥
घर्षणं भ्रामणञ्चैव तथाचैवापवर्त्तनम् ।
निशाशेषे प्रकर्त्तव्यं यावद्दूरे दिवाकरः ॥ ३७ ॥
एवं प्रतिदिनं कुर्य्यात् सप्तरात्रमतन्द्रितः ।
कारयेद् ब्राह्मणैश्चैव शान्तिस्वस्त्ययनानि च ॥ ३८ ॥
सप्तरात्रे व्यतिक्रान्ते चौरितान् स्नापयेत्तथा ।
अर्चितान् कुसुमैर्गन्धैस्ततो नीराजयेद् बुधः ॥ ३९ ॥
ततो वादित्रनिर्घोषैः कर्त्तव्या ग्रामतो वहिः ।
दिशं पूर्वां तथोदीचीमश्वा विप्रैरधिष्ठिताः ॥ ४० ॥
अग्रे वदेद्द्विजो मन्त्रं वेदोद्दिष्टं यथाक्रमम् ।
अश्वशान्तिं तुरङ्गाणां ततो हृष्टः प्रदापयेत् ॥ ४१ ॥
प्रदक्षिणं ततो वह्नेः कारयित्वा द्विजोत्तमैः ।
पुरमश्वाः प्रवेश्यास्ते तोरणान्तरनिर्गताः ॥ ४२ ॥
अग्रमाल्याग्रगन्धैश्च भोजनाद्यैस्तथैव च ।
गृहागतेषु वाहेषु अर्घं दद्यान्नराधिपः ॥ ४३ ॥
अर्चितेषु ततो वैद्यः कर्णे जापमिदं जपेत् ।
कीर्त्तितं मुनिभिः पूर्वं वाजिशास्त्रार्थवेदिभिः ॥ ४४ ॥
पूर्वं देवमयीं त्वं हि स्मर जातिं हयोत्तम ! ।
सर्वे जनास्त्वया रक्ष्या रणे भर्त्तुश्च वाहक ॥ ४५ ॥
कर्णजापं भिषक् कृत्वा यथास्थानं ततो हयान् ।
स्थापयेत् कृतमङ्गल्यान् हृष्टान् कल्मषवर्जितान् ॥ ४६ ॥
नार्चयेज्जलजैः पुष्पैर्वाहनार्घविधिं प्रति ।
सौगन्धिकविशेषेण तेषां दद्याच्च सर्वदा ॥ ४७ ॥
दत्त्वा तिक्तं घृतं पूर्वं कार्त्तिके वेधयेच्छिराम् ।
औरसीं पौत्रिकीं मन्यां कुम्भजां कोष्ठजां ततः ॥ ४८ ॥

आसां मध्ये यथायोगमेकां द्वे वापि वेधयेत् ।
प्रतिपानं ततो दद्यादुत्तमं वक्ष्यमाणकम् ॥ ४८ ॥
मञ्जिष्ठा मधुकं पुष्पं प्रियङ्गुस्त्रायमाणकम् ।
एला च पिप्पली चैव तथा कटुकरोहिणी ॥ ५० ॥
तुल्यांशान् दापयेदेतान् सीधुना मधुसंयुतान् ।
कल्कं कृत्वा तुरङ्गाय स्राविताय विचक्षणः ॥ ५१ ॥
पञ्चतिक्तकषायेण द्वितीयञ्च प्रदापयेत् ।
पिप्पली त्रायमाणाभ्यां प्रतिपानं सगोक्षुरम् ॥ ५२ ॥

हेमन्ते अश्वपोषणविधानम् ।

सुखेन वस्तिना चैव स्नेहं दद्याद्धिमागमे ।
विद्धा तालुशिरां प्राज्ञः प्रतिपानञ्च वाजिनाम् ॥ ५३ ॥
यथर्त्तुं प्रतिपानेन ततो माषान् प्रदापयेत् ।
पुष्पितान् रोगनिर्मुक्तान् कृमिभिश्चाप्यभक्षितान् ॥ ५४ ॥
पुष्पिता रक्तजनना फलिता मांसवर्द्धनाः ।
माषा भवन्ति दोषाय विना पुष्पैः फलैस्तथा ॥ ५५ ॥
दिनत्रयं न दातव्यं प्रारम्भे तूदकं बुधैः ।
एकान्तरं ततो देयं यावत् पूर्णं दिनाष्टकम् ॥ ५६ ॥
ततः प्रतिदिनं देयमेकवारं यथेच्छया ।
सकले चैव हेमन्ते विधिरेष जलं प्रति ॥ ५७ ॥
पुष्पिते वारुणी शस्ता लवणेन समन्विता ।
सतैललवणा चापि फलिते संप्रकीर्त्तिता ॥ ५८ ॥
सुराया न प्रयोगस्तु सायाह्ने परिकीर्त्तितः ।
यामिनीप्रहरेऽतीते माषान् दद्यात् सकाञ्जिकान् ॥ ५९ ॥
तृतीये सप्तकेऽतीते ततोऽश्वान् दापयेद् बुधः ।
एकान्तरं यथा तेषां श्रमः खेदश्च जायते ॥ ६० ॥
यावन्नो पाकमायाति तावन्माषा हिताः स्मृताः ।

कठिना नैव दातव्या सर्वदैव विजानता ॥ ६१ ॥
माषभक्षस्य वाहस्य यदि स्यात् शूलसम्भवः।
शूलाध्यायोपदिष्टान्तु तदा कुर्य्याद्भिषक् क्रियाम् ॥ ६२ ॥
अप्राप्तौ पर्णमाषाणां दद्यान्माषेण भोजनम्।
सतैललवणैर्माषैः शालिभिर्यवषष्टिकैः ॥ ६३ ॥
धान्यकं चित्रकं व्योषं लोध्रं लवणमेव च।
एतानि सुरया सार्द्धं हेमन्ते प्रतिपाययेत् ॥ ६४ ॥

शिशिरपोषणविधिः।

शिशिरप्रतिपानं तु त्र्यहं दद्याद्विचक्षणः।
ततश्चाग्निबलं दृष्ट्वा तुरङ्गं भोजयेद् बुधः ॥ ॥ ६५ ॥
उत्स्विन्नैः फलमाषैस्तु युक्तैः काञ्जिकमात्रया।
तिलतैलसमेतैश्च तथा लवणसंयुतैः ॥ ६६ ॥
शिशिरे तोयपानञ्च दद्यादेकं विचक्षणः।
एवं श्लेष्मा तुरङ्गाणां प्रकोपं नैव गच्छति ॥ ६७ ॥
भोजनं वाहनं चैव कुर्य्यादेकान्तरं भिषक्।
अनुपाने सुरा तेषां भोजितानां प्रकीर्त्तिता ॥ ६८ ॥
सव्योषेण विडङ्गेन हिङ्गुना वचया सह।
यवानी शतपुष्पाभ्यां पञ्चभिर्लवणैस्तथा ॥ ६९ ॥
वारुण्याः प्रतिपानन्तु शिशिरे संप्रदापयेत्।
कायाग्निदीपनं तच्च श्लेष्मदोषनिवारणम् ॥ ७० ॥
शिशिरे शर्म्मिता देया यवाः स्वस्थाय वाजिने।
सप्ताहं द्विगुणञ्चैव वाहयेच्चैव बुद्धिमान् ॥ ७१ ॥
आरम्भात् पञ्चरात्रन्तु पयःपानं न दापयेत्।
ततः सकृत् प्रदातव्य यावद्वौ सप्तकौ गतौ ॥ ७२ ॥
तृतीये सप्तमे चैव वाहयेच्च तुरङ्गमम्।
चतुर्थे च यथा शक्त्यं वाहयेच्च विचक्षणः ॥ ७३ ॥

पुष्पिताः फलिताश्चैव प्रशस्ताः सर्वदैव तु।
ये च पुष्टिप्रदा हृद्या बलारोग्यविवर्द्धनाः॥ ७४॥

वसन्तपोषणविधिः।

वसन्ते वाहयेदश्वान् भोजनं नैव दापयेत्।
खादने भक्षितास्तेषां संस्कृताः केवला यवाः॥ ७५॥
त्र्यहाद् द्व्यहाच्च दातव्यं लवणञ्च सुमात्रया।
घासः शुष्को जलं वारमेकं द्वौ वा हितं स्मृतम्॥ ७६॥
व्योषलोध्रविड़ङ्गैश्च सक्षौद्रैः सैन्धवान्वितैः।
प्रतिपानं हितं दृष्टं वसन्ते मदिरायुतम्॥ ७७॥
हेमन्ते शिशिरे विद्वान् वसन्ते च तुरङ्गमान्।
आतपे दिवसं सर्वं स्थापयेद्वाजिशास्त्रवित्॥ ७८॥
स्थानं छायान्वितं शस्तं ग्रीष्मे व्यायामवर्जिते।
त्रिःस्नानपानं घासश्च सान्द्रो यश्चापि वारिजः॥ ७९॥
अतीव घर्मतप्तानां शारदं कारयेद्विधिम्।
क्षीरयुक्तं शतावर्य्या मूलं पाने च शस्यते॥ ८०॥
दुर्बलानां प्रदातव्यं सार्द्धं माषरसेन तु।
यवभक्तं युतं दध्ना वाहानां स्वल्पसैन्धवम्॥ ८१॥
कुक्कुटीमूलकल्कश्च क्षीरेणालोड़ितस्तथा।
ग्रीष्मकाले हितो दृष्टो वाजिनां हितकाङ्क्षिभिः॥ ८२॥
प्रियङ्गु पिप्पलीलोध्रमधुकं विश्वभेषजम्।
निदाघे प्रतिपानं स्यात् सीधुना मधुना युतम्॥ ८३॥

सर्वर्त्तुपोषणविधिः।

देशे देशे च घासानां नामान्यत्वं प्रजायते।
तेन घासा मया नैव नामभिः परिकीर्त्तिताः॥ ८४॥
औदकं दापयेद्घासं ग्रीष्मे शरदि वाजिनाम्।
कालेऽन्यस्मिन् हितो दृष्टः शुष्को रोगविवर्जितः॥ ८५

सर्वेषु चैव रोगेषु तथा कालेषु षट्स्वपि ।
दूर्वा नित्यं हिता दृष्टा वाजिपुष्टिविवर्द्धिनी ॥ ८६ ॥
मात्रावत् संप्रयुञ्जीत स्वस्थानां सर्वकालिकम् ।
तैलं कालानुरूपोक्तं पञ्चषड्दिवसान्तरे ॥ ८७ ॥
व्योषजीरकसिन्धूत्थविड़सौवर्चलानलैः ।
हरिद्राद्वयपूतीकवीजशिग्रुकुठेरकैः ॥ ८८ ॥
गोमूत्रपिष्टैः पिण्डन्तु प्रातर्वाजिषु दापयेत् ।
मन्दाग्निदीपनं श्रेष्ठं बलतेजोविवर्द्धनम् ॥ ८९ ॥
अथवा सुरया सार्द्धं प्रतिपानेषु योजितः ।
कायाग्निदीपनश्चाशु पिण्डोऽयं मुनिभाषितः ॥ ९० ॥
सर्वदैव तुरङ्गाणां हितमेतत् प्रकीर्त्तितम् ।
कण्डूयनं सुखं चाग्र्यं तेषां प्रोक्तं मनीषिभिः ॥ ९१ ॥
संग्रामादिषु कालेषु तं स्मरन्ति हयोत्तमाः ।
तस्मात् कार्य्यं प्रयत्नेन तेषां कण्डूयनं बुधैः ॥ ९२ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे सर्वर्त्तूपचारे
त्रयोदशोऽध्यायः ॥ १३ ॥

## अथ चतुर्दशोऽध्यायः ।

### क्षारदाहविधानम् ।

एकस्य वा द्वयोर्वापि समस्तानामथापि वा ।
रम्भापामार्गभानूनां स्नुही लाङ्गलि पुष्करान् ॥ १ ॥
दग्ध्वा भस्म समादाय गोमूत्रेण तु गालयेत् ।
गालितानन्तरं तच्च ताम्रपात्रे निधापयेत् ॥ २ ॥
मृद्वग्निना पचेन्मूत्रं ततो दर्वीविघट्टितम् ।
भेषजानि क्षिपेत्तस्मिन् दर्वीलेपत्वमागते ॥ ३ ॥

हिङ्गु टङ्कं यवक्षारं पञ्चैव लवणानि च।
क्षिप्तैतानि पचेत्तावद् यावत्तच्चूर्णतां गतम्॥ ४॥
तच्चूर्णन्तु भवेत् सिद्धं स्थापयेत् शीतलं कृतम्।
वातजे कफजे कुष्ठे चार्बुदे मांसकीलके॥ ५॥
लोमान्युत्पाद्य दातव्यः क्षार एष शलाकया॥ ६॥

लौहदाहविधानम्।

वायौ प्रकुपितेऽत्यर्थमग्निं दद्याद्विचक्षणः।
यथाशास्त्रं भिषक् प्राज्ञो लौहकैर्मेदसापि वा॥ ७॥
शलाकाभिश्च फालैश्च तप्तैर्लौहैन कीर्त्तितः।
वर्त्तिभिर्विन्दुदाहेन मेदसा समुदाहृतः॥ ८॥
अग्रकायं दहेल्लोहैः पश्चात् कायन्तु मेदसा।
एवं यः कुरुते सम्यक् तस्य सिद्धिर्न दूरतः॥ ९॥
दहेत् प्रथमया लोम चर्म चैव द्वितीयया।
मांसं तृतीयया सम्यग् दहेद्विद्वा शलाकया॥ १०॥
समांसलेषु देशेषु फालैर्वह्निं प्रदापयेत्।
रेखाभिर्विन्दुभिश्चैव तथा काकपदादिभिः॥ ११॥
दहेद्देशं सम्यगेवं वाजिनोऽङ्गं शलाकया।
दग्ध्वा मधुककल्केन घृतमिश्रेण लेपयेत्॥ १२॥

मेदोदाहविधानम्।

पुरलाक्षामधूच्छिष्टसर्जश्रीवेष्टकैः समैः।
मनःशिला गुडोपेतैर्वर्त्तिमष्टाङ्गुलायताम्॥ १३॥
कृत्वाष्टाङ्गुलविस्तारां शूकरादिवसान्विताम्।
घृतप्लुतेन संवेष्ट्य कर्पटेन विनिःक्षिपेत्॥ १४॥
अधोभागे दृढं विद्धा सुषिरे वेणुदण्डकैः।
प्रक्षिप्य छिद्रं कुर्वीत अधोभागे विचक्षणः॥ १५॥
कोलास्थिमात्रदण्डस्य द्विहस्तस्य विचक्षणः।

यस्मिन् स्थाने स्थिता वर्त्तिस्तत्र दण्डं प्रवर्त्तयेत् ॥ १६ ॥
अधोभागे घृताक्तेनालक्तकेनाङ्गुलाष्टकम्।
यस्मिन् कृत्वा ततो वह्निं भृशं प्रज्वालयेद्बुधः ॥ १७ ॥
तुरङ्गाङ्गे ततो दण्डं विद्वानुपरि धारयेत्।
द्रुताया वह्नितापेन वर्त्त्याश्छिद्रान्तरे गतेः ॥ १८ ॥
विन्दुभिर्दाहयेदश्वं सुवर्णं पातितं चितौ।
पश्चात् कायसमुत्थेन वायुनैवं विमुच्यते ॥ १९ ॥

दाहलक्षणम्।

विल्वमध्यसवर्णन्तु पक्वतालनिभं तथा।
सम्यग्दग्धं विजानीयाद् विपरीतं विवर्जयेत् ॥ २० ॥

शस्त्रविधानम्।

अर्द्धाङ्गुलन्तु विस्तीर्णं कुर्य्याच्छस्त्रं षड़ङ्गुलम्।
नाम्ना व्रीहिमुखं सम्यक् तथा चोत्पलपत्रकम् ॥ २१ ॥
त्र्यङ्गुलं व्रीहिपत्रञ्च क्षुराकारं प्रकीर्त्तितम्।
पक्वशोथादिषु प्राज्ञः पाटनं तेन कारयेत् ॥ २२ ॥
शस्त्रेणोत्पलपत्रेण व्रीहिपत्रेण वा भिषक्।
शिरावेधविधिं सम्यग् दृष्टकर्मा प्रयोजयेत् ॥ २३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे चाराग्निशस्त्र-
विधाने चतुर्दशोऽध्यायः।

---

## अथ पञ्चदशोऽध्यायः।

### शिरावेध कालनिरूपणम्।

अतःपरं प्रवक्ष्यामि शिरावेधविनिश्चयम्।
प्रधानं वाजिनामेतद्भेषजं गदितं बुधैः ॥ १ ॥

औषधैर्नैव सिध्यन्ति रोगा रक्तसमुद्भवाः।
यतो वेधेन सिध्यन्ति स्निग्धस्विन्नस्य वाजिनः॥ २॥
देहस्य रुधिरं मूलं तदालम्बं हि जीवितम्।
तस्मान्न वाहयेच्छुद्धं दुष्टञ्चैव न धारयेत्॥ ३॥
शरत्काले निदाघे च विकाले वेधयेच्छिराम्।
अदुर्दिने च वर्षासु शीते मध्यन्दिने तथा॥ ४॥
शिशिरे च वसन्ते च स्वेदं कृत्वा विचक्षणः।
शीतकाले च मध्याह्ने शिरावेधं प्रयोजयेत्॥ ५॥

शोणितविवरणम्।

शब्दवत् फेनिलं यच्च तद्रक्तं वातजं स्मृतम्।
श्यावञ्च नीलकं वापि ज्ञेयं पित्तेन दूषितम्॥ ६॥
सान्द्रञ्च पिच्छिलं पाण्डु श्लैष्मिकं परिकीर्त्तितम्।
द्विरूपं द्वन्द्वसम्भूतं सङ्कीर्णं सन्निपातजम्॥ ७॥
शशशोणितसङ्काशं यच्च सिन्दूरसन्निभम्।
तद्विशुद्धं भवेद्रक्तं शिरावेधविनिर्गतम्॥ ८॥
शरावशकलं दत्त्वा शस्त्रवेधमुखे बुधः।
कर्पटेन दृढं बद्ध्वा रुधिरं सन्निवारयेत्॥ ९॥
अतिवेगात् प्रवृत्तन्तु यद्येवं नैव तिष्ठति।
शिरावेधं तदा प्राज्ञो माषकल्केन लेपयेत्॥ १०॥
महावेगं यदा रक्तमनेनापि न तिष्ठति।
ततः शस्त्रमुखं प्राज्ञो दहेल्लोहशलाकया॥ ११॥

वेधस्थानकथनम्।

वामे वा दक्षिणे वापि देशे चैवाङ्गुलान्तरे।
अग्रे बलित्रयं त्यक्त्वा वेधव्या तालुकी शिरा॥ १२॥
शङ्खजा चैव विस्राव्या अपाङ्गाद् द्व्यङ्गुलान्तरे।
अश्रुपातगता चैव त्र्यङ्गुले चक्षुषोरधः॥ १३॥

कण्ठे बद्ध्वा दृढं प्राज्ञः शिरां विस्रावयेत्ततः।
नासिकाया अधस्ताच्च द्व्यङ्गुले प्रोथजां शिराम्॥ १४॥
ऊर्द्ध्वन्तु द्व्यङ्गुले चापि बाहुसन्धेर्विचक्षणः।
उरसश्चाधरे भागे तथा वै चतुरङ्गुले॥ १५॥
ग्रीवामुत्क्षिप्य दूरन्तु उरो निःसार्य्य वाजिनः।
औरसीं वेधयेद्वैद्यः शिरां संलक्ष्य तत्त्वतः॥ १६॥
किणजाभ्यन्तरे विद्वान् पारकीमुपलक्षयेत्।
किणाधो द्व्यङ्गुले तास्तु त्र्यङ्गुले चापि वेधयेत्॥ १७॥
ऊर्द्ध्वञ्चैवाक्षिकूटात्तु लालाटीं वेधयेत् शिराम्।
स्तुवजा चैव वेध्या स्याद् द्व्यङ्गुले स्तुवसन्धितः॥ १८॥
द्व्यङ्गुले कर्णमूलात्तु कर्णजान्ताड़येद्भिषक्।
वेधव्या चैव मन्या तु ग्रीवामध्यगता शिरा॥ १९॥
ऊर्द्ध्वं कूर्च्चात्तु वेधव्या ईषिका चतुरङ्गुले।
अङ्गुलैः षट्प्रमाणैस्तु अधस्ताच्चैव जानुनः॥ २०॥
षड़ङ्गुलं खुरादूर्द्ध्वं कूर्चजां वेधयेच्छिराम्।
रोमान्या चैव वेधव्या द्व्यङ्गुले खुरसन्धितः॥ २१॥
मण्डूकाग्रञ्च संशोध्य तलजां वेधयेद् बुधः।
कक्षजा चैव वेधव्या कक्षातश्चतुरङ्गुले॥ २२॥
वामदक्षिणभागे तु नाभिजाष्टाङ्गुलान्तरे।
कोष्ठजां ताड़येद्वैद्यः शिरां शस्त्रेण बुद्धिमान्॥ २३॥
पृष्ठजामासनाभ्यासे द्व्यङ्गुलेनैव पार्श्वयोः।
बद्ध्वा कर्पटकं यत्र शिरां विस्रावयेद् बुधः॥ २४॥
ऊरुसन्धेरधस्तात्तु विसृज्य चतुरङ्गुले।
ऊरुकाभ्यन्तरे चैव अपाङ्गीं वेधयेच्छिराम्॥ २५॥
ऊर्द्ध्वं सन्धेरधश्चैव स्यौरिकीं चतुरङ्गुले।
द्व्यङ्गुले पुच्छमूलाच्च पुच्छजां ताड़येच्छिराम्॥ २६॥

पश्चात्कायसमुत्थानां शिराणां जानुनोरधः।
तलजानाञ्च कर्त्तव्यं प्राक् प्रयुक्ताञ्च वेधयेत्॥ २७॥
सर्वेषां शोणितप्रस्थं गालयेच्छास्त्रकोविदः।
गुरुलाघवदोषेण बहु चैवाल्पमेव च॥ २८॥
वामाङ्गुष्ठेन संपीड्य सिरां शस्त्रेण ताड़येत्।
श्रान्तं भीतं कृशं वृद्धं बालञ्चैव न वेधयेत्॥ २९॥
प्रदेशे लोमशे नित्यं लोमान्युत्पाट्य वेधयेत्।
प्रमाणार्थञ्च पात्रेण रक्तं गृह्णाति बुद्धिमान्॥ ३०॥
तालुशङ्खहनुप्रोथललाटस्तनकर्णजाः।
कृत्वा यवसमं शस्त्रं शिरा विस्रावयेद् बुधः॥ ३१॥
उरोजां पोत्रिकाञ्चैव कूर्च्चजां कोष्ठजां तथा।
अर्द्धाङ्गुलेन शस्त्रेण तलजाञ्चैव ताड़येत्॥ ३२॥
औपाण्डीं स्यौरिकीं वापि कक्षकोष्ठभवां तथा।
पूर्वोक्तेनैव शस्त्रेण पुच्छजामपि ताड़येत्॥ ३३॥
अङ्गुलं प्रक्षिपेच्छस्त्रं पृष्ठजायां तथैव च।
बाहुजायाञ्च मन्यायां वेधकाले विचक्षणः॥ ३४॥
सूत्रकेण च संवेष्ट्य मुखं शस्त्रस्य बुद्धिमान्।
यथा प्रमाणं संस्थाप्य ततो विस्रावयेत् शिराम्॥ ३५॥
असम्यक् ताड़िते भीते वाहे वा विषमस्थिते।
क्षीणासृक् शिशिरे तोयादुत्थिते च विशेषतः॥ ३६॥
न वहन्ति सिरा ह्येवं तस्मात् कार्य्या प्रतिक्रिया।
हयस्य वमनं नास्ति तथा चैव विरेचनम्।
वमनं रेचनं नास्ति रक्तस्रावणमुत्तमम्॥ ३७॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
शिरावेधे पञ्चदशोऽध्यायः।

---

# अथ षोड़शोऽध्यायः ।

## नेत्रनिर्माणविवरणम् ।

अथानुवासनविधिस्तथैवास्थापनस्य च ।
प्रवक्ष्यामि यथायोगं शास्त्रदृष्टेन वर्त्मना ॥ १ ॥
काष्ठैर्दण्डैरयोभिश्च शृङ्गवंशनलादिभिः ।
द्वादशाङ्गुलदीर्घन्तु परिणाहे षडङ्गुलम् ॥ २ ॥
कोलास्थिमात्रच्छिद्रन्तु कुर्य्यान्नेत्रं विचक्षणः ।
मूलादनुक्रमस्तस्यामस्तणन्तु विशेषतः ॥ ३ ॥
त्यक्त्वाङ्गुलानि चत्वारि कर्णिकान्तस्य कारयेत् ।
पुटकस्य प्रबन्धाय मूले द्वे चापि कर्णिके ॥ ४ ॥
अनेनास्थापनं कुर्य्यादनुवासनमेव च ।
यथायोग्यं भिषक् प्राज्ञः सर्वरोगोपशान्तये ॥ ५ ॥

## अनुवासनविवरणम् ।

त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
भोजयित्वा हयं प्राज्ञो रसकस्नेहभोजनैः ॥ ६ ॥
भोजितं भोजनोक्तेन दिनान्ते चानुवासयेत् ।
निरूहयेदनाहारमपराह्णे विचक्षणः ॥ ७ ॥
त्रिभिर्वारैः प्रदातव्यो निरूहः शास्त्रकोविदैः ।
ईषत्तीक्ष्णः प्रयोक्तव्यः प्रथमं पुटकोविदैः ॥ ८ ॥
द्वितीयश्च तृतीयश्च तीक्ष्णौ चैव प्रकीर्त्तितौ ।
एवमास्थापिते वाहे निवृत्ते च निरूहणे ॥ ९ ॥
क्षीरस्य पुटकं पश्चादेकं दद्याद्विचक्षणः ।
ततो विस्रावयेद्वैद्यस्त्वेकवारं तुरङ्गमम् ॥ १० ॥
विस्रावितं स्नापयित्वा पायसैर्भोजयेत्ततः ।
स्नेहानुवासनं तस्य विकाले च प्रदापयेत् ॥ ११ ॥

स्तोका दूर्वा क्षुधार्त्ताय तस्यां रात्रौ हिता स्मृता।
त्र्यहं वापि हितं दृष्टं भोजनं सानुवासनम्॥ १२॥
यथाकालं यथाव्याधि भोजनं संप्रदापयेत्।
एवं रोगाः प्रशाम्यन्ति वाजिनां देहसम्भवाः॥ १३॥

निरूहविवरणम्।

पञ्चमूलद्वयं दन्ती कुष्ठञ्चैव शतावरी।
अनन्ता त्रिवृता श्यामा बले द्वे च पुनर्णवा॥ १४॥
गुडूची गोक्षुरं विम्बी कुक्कुटैरण्डवासकाः।
यवाः कुलत्था वदरं तथारग्वधशिग्रुकम्॥ १५॥
एतान्यादाय सर्वाणि यथालब्धानि वा पुनः।
मूलानि सलिले क्षिप्त्वा क्वाथयित्वा विचक्षणः॥ १६॥
पादशेषं कषायेण निरूहं संप्रदापयेत्।
द्विपञ्चमूलीनिःक्वाथः सः प्रधानो निरूहणे॥ १७॥
कषायं रसकञ्चैव गोमूत्रं काञ्जिकं तथा।
कल्कञ्चैव प्रदातव्यं भेषजैर्वक्ष्यमाणकैः॥ १८॥
त्रिफला मधुकं रास्ना मदनं गौरसर्षपाः।
एला त्रिकटुकं कुष्ठं शतपुष्पा हरेणुकम्॥ १९॥
हरिद्रे द्वे समञ्जिष्ठे तथा लवणपञ्चकम्।
यथाप्राप्तं समस्तं वा वर्गमेतं प्रदापयेत्॥ २०॥
कफोल्वणेषु रोगेषु तथा वातोल्वणेषु च।
निरूहः संप्रदातव्यस्तुरङ्गस्य विपश्चिता॥ २१॥
कषाये कल्कमालोड्य निरूहं संप्रदापयेत्।
नैवात्यन्ततनुं धीमान् नैवात्यन्तघनं तथा॥ २२॥
पित्ते निरूहः कर्त्तव्यः क्षीरेणेक्षुरसेन वा।
सिन्धुसर्पिःसमायुक्तः शर्करा मधुसंयुतः॥ २३॥
चतुर्वर्षस्य वाहस्य गुदे नेत्रं प्रवेशयेत्।

चतुरङ्गुलं भिषक् प्राज्ञो वाजिशास्त्रविशारदः ॥ २४ ॥
द्वे च द्विवर्षजातस्य त्रिवर्षे चाङ्गुलत्रयम् ।
षाण्मासिके वर्षजाते एकमेवाङ्गुलं भवेत् ॥ २५ ॥
उदङ्मुखं प्राङ्मुखं वा कृत्वा वाहं सुयन्त्रितम् ।
घृताभ्यक्तेन हस्तेन पुरीषमपकर्षयेत् ॥ २६ ॥
स्वयं कृत्वा पुरीषे वा दद्यान्नैवानुवासनम् ।
निरूहश्च प्रदातव्यः पुच्छं नीत्वा प्रदक्षिणम् ॥ २७ ॥
दद्रुशोफकफश्वासग्रहणीकुष्ठरोगिणाम् ।
तृषार्त्तस्य च गर्भिण्याः कृशवृद्धस्य वाजिनः ॥ २८ ॥
क्षुत्तृष्णाश्रमयुक्तानां मद्यं पीतवतामपि ।
वर्जितो वाजिनां वस्तिस्तथाश्वे व्याधिपीड़िते ॥ २९ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
निरूहानुवासने षोड़शोऽध्यायः ।

---

## अथ सप्तदशोऽध्यायः ।

### नस्यविधिः ।

ऊर्द्ध्वं वक्त्रस्य दोषोऽस्ति तथा चाधोमुखस्य च ।
तस्मान्नस्यं तुरङ्गस्य ईषदुन्नाम्य दापयेत् ॥ १ ॥
वामाङ्गुष्ठेन संपीड्य एकं नासापुटं बुधः ।
दद्यान्नस्यं तुरङ्गस्य लघुहस्तः सुमात्रया ॥ २ ॥
नाड्यातिश्लक्ष्णया वैद्यो यथा नोद्विजते हयः ।
अन्यथा जायते शीघ्रं नाड़ीव्यापत् सुदारुणा ॥ ३ ॥
तीक्ष्णैर्वा पूरयेन्नाड्या देयं नस्यं विजानता ।
चन्दनोशीरयष्ट्याह्व क्षीरतोयैः सशर्करैः ॥ ४ ॥

नस्यं दद्याद् भिषक् प्राज्ञो नाना दोषहिताय वै ।
शरत्कालोचिताः कार्य्याः स्नानपानादिपूर्विकाः ॥ ५ ॥
क्रियाः सर्वाः समासेन वाजिनां हितमिच्छता ।
वाते स्निग्धं कफे चोष्णं पित्ते वै स्वादुशीतलम् ॥ ६ ॥
कफे रूक्षञ्च तीक्ष्णञ्च नस्यं प्रोक्तं तपोधनैः ।
त्रिवृच्चूर्णं तथा तैलसर्पिषा वसया तथा ॥ ७ ॥
स्निग्धमेतत् स्मृतं नस्यं वाते वापि प्रशस्यते ।
जीवनीयौ समधुकौ शर्करा क्षीरवारिणा ॥ ८ ॥
स्वादुशीतं भवेन्नस्यं पित्तरोगविनाशनम् ।
वार्त्ताकव्योषकल्केन निर्गुण्डी स्वरसेन वा ॥ ९ ॥
रूक्षं तीक्ष्णं सगोमूत्रं नस्यं प्रोक्तं कफापहम् ।
सन्निपाते प्रयोक्तव्यं स्निग्धशीतलतीक्ष्णकैः ॥ १० ॥

इति श्रीमहामामन्तजयदत्तकृतेऽश्वशास्त्रे
नस्यविधाने सप्तदशोऽध्यायः ।

---

## अथ अष्टादशोऽध्यायः ।

### स्वेदविधानम् ।

यत्र क्वाथेन यः स्वेदो गुरुः स्वेदः स उच्यते ।
वालुकापुटकैः स्वेदः पुटस्वेद उदाहृतः ॥ १ ॥
शकृता महिषाश्वानां गोमयेन तथैव च ।
अग्नितप्तेन यः स्वेदः शङ्करस्वेद उच्यते ॥ २ ॥
अतसीभिः शणैर्माषैर्बीजैः काश्मर्य्यसम्भवैः ।
गोधूमैस्तिलयवैश्चैव कुलत्थैर्धान्यसम्भवैः ॥ ३ ॥
वर्षाभू गोक्षुरैरण्डैर्धान्याम्लाम्लमिश्रितैः समैः ।

सर्ववातहराः स्वेदः पुटाख्यो गात्रसम्भवः ॥ ४ ॥
सुतप्तकाञ्जिकैः सिक्तं तुषं बद्ध्वा पुटं भिषक्।
तुषस्वेदं तुरङ्गस्य धान्यैर्वापि प्रदापयेत् ॥ ५ ॥
कफे रूक्षं प्रशंसन्ति स्वेदं शास्त्रविदो जनाः।
स्नाभाव्यं वाते तैलेन सर्पिषा वा प्रदापयेत् ॥ ६ ॥
वातश्लेष्मणि वाते वा कफे वा स्वेद उच्यते ॥ ७ ॥
पित्तरोगातुरः श्रान्तः क्षुधार्त्तश्च पिपासितः।
अस्वेद्यः कीर्त्तितो वाजी वड़वा चैव गर्भिणी ॥ ८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
स्वेदविधानेऽष्टादशोऽध्यायः।

---

## अथ एकोनविंशोऽध्यायः।

### स्नेहप्रयोगः।

स्नेहप्रयोगो द्विविधः पिण्डः पेयश्च वाजिनाम्।
पिण्डो भोजनसंयुक्तः पाने पेयः स उच्यते ॥ १ ॥
शरत्काले प्रधानस्तु प्रयोगः सर्पिषो मतः।
हेमन्ते शिशिरे चैव तैलस्य समुदाहृतः ॥ २ ॥
पलपञ्चकमारभ्य त्रीणि त्रीणि विवर्द्धयेत्।
पूर्णः प्रस्थो भवेद् यावदश्वपाने त्वयं विधिः ॥ ३ ॥
अश्वपानाच्च दातव्यमर्द्धं स्नेहस्य पण्डितैः।
प्रभाते वा विकाले वा पिण्डं दद्याद्भिषक् तथा ॥ ४ ॥
एकेनाह्ना न दातव्यं प्रस्थादूर्द्ध्वं घृतं बुधैः।
आढ़कादपरो नैव प्रयोगस्तस्य शस्यते ॥ ५ ॥
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा।
दशाहं द्वादशाहं वा दद्यात् स्नेहं निरन्तरम् ॥ ६ ॥

क्षुधिते यवसं दूर्वां तस्मै दद्याद्विचक्षणः।
सुखोष्णं सलिलञ्चैव प्रशस्तं परिकीर्त्तितम्॥ ७॥
स्निग्धता सर्वगात्राणां वर्चः स्निग्धमसंहतम्।
सम्यक् स्निग्धस्य वाहस्य उत्साहश्चैव जायते॥ ८॥
अरुचिर्दीनता चैव पादानां श्वयथुस्तथा।
अतिभिन्नपुरीषञ्च अतिस्निग्धस्य लक्षणम्॥ ९॥
अस्निग्धस्य भवेद्वर्चो रूक्षवर्त्तितमेव च।
तस्मै वातो भिषक् प्राज्ञः पुनः स्नेहं प्रदापयेत्॥ १०॥
सम्यक्स्निग्धं प्रशंसन्ति मुनयः शास्त्रकोविदाः।
अतिस्निग्धस्य रूक्षस्य द्वावेतौ निन्दितौ स्मृतौ॥ ११॥
अतिस्निग्धस्य वाहस्य कुर्य्याच्चैव विचक्षणः।
भोजनैः प्रतिपानैश्च वक्ष्यमाणैरनन्तरम्॥ १२॥
सुरालवणसंयुक्तं प्रातर्दद्याद्विचक्षणः।
यवागूभोजनञ्चैव विकाले तक्रसंयुतम्॥ १३॥
मुद्गाश्च भोजने देयास्तक्रेणाम्लेन मर्दिताः।
एतत्त्र्यहं प्रकर्त्तव्यं पञ्चाहं वा भिषग्वरैः॥ १४॥
एवं विरूक्षितानान्तु शुष्कघासैकवर्त्तिनाम्।
कायाग्नेर्जायते वृद्धिः स्वल्पाम्भसापि वाजिनाम्॥ १५॥
तैलं क्षारेण संयुक्तं प्रावृट्काले प्रदापयेत्।
क्षीरयुक्तं शरत्काले हेमन्ते सुरया युतम्॥ १६॥
शिशिरे लवणैर्युक्तं वसन्ते त्रिफलान्वितम्।
वारिणा द्विगुणेनैव ग्रीष्मकाले प्रशस्यते॥ १७॥
अपक्वं नैव दातव्यं पाने स्वस्थेषु वाजिषु।
समीक्ष्य दोषं पक्वञ्च तैलं दद्याद्विचक्षणः॥ १८॥
आमं दत्तं गुदे तैलमभिष्यन्दाय जायते।
तस्माद्दद्याद्विशेषेण स्नेहं वस्तौ विपाचितम्॥ १९॥

मन्दकोष्ठानले वाह्ने स्थूले चातिकृशे तथा।
स्नेहपानं न दातव्यं व्यायामेन च योजिते ॥ २० ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
स्नेहप्रयोगे एकोनविंशोऽध्यायः।

---

# अथ विंशोऽध्यायः।

## तैलविधानम्।

### मधुकादितैलम्।

मधुकोशीरयष्ट्याह्वरक्तचन्दनपद्मकैः।
श्रीपुष्पधातकीलोध्रमञ्जिष्ठाचन्दनैः समैः ॥ १ ॥
कल्कीकृतं पचेत्तैलं गोक्षीरेण समन्वितम्।
पित्तदोषविनाशाय मधुकाद्यभिधानकम् ॥ २ ॥

### त्रिवृत्सर्पिः।

सर्पिस्तैलं वसां चैव एकीकृत्य विचक्षणः।
दशमूलकषायेण तत्कल्कैः पाचयेद्भिषक् ॥ ३ ॥
मृदग्निना त्रिवृताख्यं नस्यपानादिकामिकम्।
वातव्याधिविनाशाय कीर्त्तितं यत्तपोधनैः ॥ ४ ॥

### प्रसारणीतैलम्।

शतं शतं पलानान्तु प्रसारण्यश्वगन्धयोः।
दशमूलशतञ्चैव क्वाथयित्वा विचक्षणः ॥ ५ ॥
माषपर्ण्याः पलं वापि मुद्गपर्ण्याः पलं तथा।
सैन्धवस्य पले द्वे तु चित्रकस्य तथैव च ॥ ६ ॥
पिप्पलीनां तथामूलं प्रसारण्याश्च बुद्धिमान्।
यवक्षारञ्च गृह्णीयाद् बुधो द्विपलिकं तथा ॥ ७ ॥

पलैकं चाष्टवर्गन्तु कल्कार्थे संप्रयोजयेत्।
पूर्वोक्तेन कषायेण दधिक्षीरतुषोदकैः॥ ८॥
पचेत् प्रसारणीतैलं भिषग्विद्वान् समाहितः।
वातरोगेषु सर्वेषु हितं भेषजमुत्तमम्॥ ९॥
दशमूलस्य कल्केन तत्कषायाम्लकाञ्जिकैः।
लवणैः संयुतं तैलं पचेद्वातविनाशनम्॥ १०॥
तुल्याभ्यां घृततैलाभ्यां त्रिवृतोक्तैश्च भेषजैः।
मिश्रकं साधयेत्तैलं वसातैलेषु मध्यमम्॥ ११॥
अपक्वं यमकं प्रोक्तं घृतं तैलसमीकृतम्।
पाने वस्तौ तथाभ्यङ्गे वातरोगेषु शस्यते॥ १२॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
तैलविधाने विंशोऽध्यायः।

## अथ एकविंशोऽध्यायः।

### घृतविधानम्।

पञ्चतिक्तघृतम्।

वासानिम्बकरञ्जानां सप्तपर्णीपटोलयोः।
साधयेत् क्वाथकल्काभ्यां पञ्चतिक्तघृतं बुधः॥ १॥

करञ्जाद्यं घृतम्।

करञ्जोशीरमधुकैः श्यामाचन्दनपद्मकैः।
त्रायमाणा शटी मूर्वा पटोलातिविषैः समैः॥ २॥
एतैः सर्वैस्तथा सार्द्धं त्रिचतुःपञ्चसम्मितैः।
कल्कीकृतैः पचेत् सर्पिस्त्रिफलाया रसेन तु॥ ३॥
पित्तदोषापहं हृद्यं बलतेजो विवर्द्धनम्।
करञ्जाद्यभिधानन्तु जीवनं बृंहणं भिषक्॥ ४॥

द्वितीयं पञ्चतिक्तं घृतम्।

पटोलं वासकं निम्बं गुडूची कण्टकारिका।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत्॥ ५॥
त्रिफलायाः पलान्यष्ट तत्रैव दापयेद्भिषक्।
चतुर्भागावशेषन्तु कषायमवतारयेत्॥ ६॥
घृतप्रस्थं प्रदातव्यं त्रूषणस्य पलद्वयम्।
कासे श्वासे च हिक्कायां गलगण्डार्द्दितेषु च॥ ७॥
ये चान्ये कफजाः केचित् रोगा वातप्रकोपजाः।
पैत्तिका द्वन्द्वजाश्चापि तथा वै सन्निपातजाः॥ ८॥
एतानपि निहन्त्याशु पञ्चतिक्तमिदं घृतम्॥

इति श्रीमद्वासामन्तजयदत्तकृतेऽश्वशास्त्रे
घृतविधाने एकविंशोऽध्यायः।

## अथ द्वाविंशोऽध्यायः।

### श्रान्तोपचारः।

श्रमो भवति रोगाय वाहानामतिवाहनात्।
श्वासिनः श्लथदेहाश्च दीनास्तेन भवन्ति वै॥ १॥
श्रान्तस्य मदिरां दद्यात् गुड़युक्तां विजानता।
पश्चाद्वासः प्रदातव्यो जलपानं भवेत्ततः॥ २॥
गोमयं लवणं मूत्रं क्वथितं स्नेहसमन्वितम्।
सर्वाङ्गलेपनं प्रोक्तं मुनिभिः श्रमशान्तये॥ ३॥
मर्द्दयेत् सर्वगात्राणि गोमयेनाथवा पुनः।
क्षीरोदकेन वस्तिञ्च दद्यात् सेकञ्च मूर्द्धनि॥ ४॥
सर्वकायिकमभ्यङ्गं सर्पिषा चैव कारयेत्।
श्वोभूतजलकुम्भस्थान् संस्कृतान् दापयेद् यवान्॥ ५॥

एता एव क्रिया वैद्यः पञ्चरात्रं प्रयोजयेत्।
मांसानां रसकैर्युक्तं यवान्नं भोजयेद्भिषक्॥ ६॥
प्रथमे दिवसे दद्यात् कम्पनाय च वाजिने।
मांसानां रसकं पानं मारुतोद्भवशान्तये॥ ७॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
श्रान्तोपचारे द्वाविंशोऽध्यायः।

---

## अथ त्रयोविंशोऽध्यायः।

### स्वस्थारिष्टः।

अथातः संप्रवक्ष्यामि स्वस्थारिष्टस्य लक्षणम्।
शालिहोत्रादिभिः पूर्वमृषिभिः कीर्त्तितं यथा॥ १॥
दुर्मना हीनवर्णश्च दत्तं नैव च खादति।
विना रोगमकस्माद् यो गतायुः स प्रकीर्त्तितः॥ २॥
पराङ्मुखी भवेद् यस्य छाया चैव न दृश्यते।
द्विगुणा वा सच्छिद्रा वा गतायुः सोऽपि कथ्यते॥ ३॥
ललाटे पुच्छमूले वा श्वयथुर्यस्य जायते।
यस्य रोमाणि स्निग्धानि तैलाक्ता इव केशराः॥ ४॥
असाध्य इति जानीयात् सप्ताहं तस्य जीवितम्।
मेढ्रं निष्क्राम्य यो वाजी शार्दूलवन्निषीदति॥ ५॥
विवर्णा दशना यस्य सहसा वा पतन्ति च।
श्यावौष्ठतालुजिह्वाश्च तेऽपि यातायुषो मताः॥ ६॥
स्नातस्य यस्य वाहस्य पूर्वं क्रोड़ं विशुष्यति।
मासेन मरणं तस्य निर्दिष्टं शास्त्रकोविदैः॥ ७॥
नासामेढ्राक्षिपायुभ्योऽकस्माद् यस्य च शोणितम्।
सपित्तं जायते यस्य श्वासार्त्तोऽप्यतिमूत्रवान्॥ ८॥

शूनोदरगुदमेढ्रो यश्चैते विगतायुषः।
पूतिगन्धं भवेद् यस्य दुर्गन्धं मूत्रविट् तथा ॥ ९ ॥
दृष्ट आकम्पते यश्च ग्रासमुद्गिरते यदि।
मक्षिकैर्भक्षितः पश्चात् निमिषे यस्य लोचने ॥ १० ॥
न शृणोति च कर्णाभ्यां स्पष्टं दष्टं न बुध्यते।
न चालयति लाङ्गूलं स्तब्धकर्णश्च जायते ॥ ११ ॥
श्रवणे पाण्डुरा रक्ता शिरा यस्य च वेधिता।
मस्तके तालुके कण्ठे हृदि मुष्के च जायते ॥ १२ ॥
श्वयथुः कठिनोऽत्यर्थं रक्तहीनाश्च वाजिनः।
मुखेन स्रवते लाला प्रस्वेदो यस्य लेपवत् ॥ १३ ॥
तालुकं स्फोटकाकीर्णं नेत्रे कान्तिविवर्जिते।
स्नाने पाने विरक्तश्च निद्राहीनोऽवघूर्णते ॥ १४ ॥
यस्यैकैकं भवेच्चिह्नं मासान्तं तस्य जीवितम्।
रोगीभूतस्य वाहस्य क्रियया वर्जितस्य च ॥ १५ ॥
यस्यैकैकं भवेच्चिह्नं पक्षाहाभ्यन्तरे मृतिः।
जिह्वाग्रे पिड़का यस्य दृश्यते च तथाधरे ॥ १६ ॥
मूत्रं करोति रक्ताढ्यं सप्तमासान् स जीवति।
यस्य श्वासो भवेदुष्णः शरीरं पुलकाञ्चितम् ॥ १७ ॥
जिह्वा हिमसमाकारा स्वल्पायुः परिकीर्त्तितः।
रक्तमस्रु च नेत्रान्ते पाण्डुरे च गतायुषः ॥ १८ ॥
स्विन्ने मांसान्विते नेत्रे रक्ताभे रक्तवाजिनः।
कृष्णपीतविचित्रैश्च सप्तमे स्वल्पजीविनः ॥ १९ ॥
नेत्रैश्चैव विवर्णैश्च सप्तरात्रन्तु जीवति।
रक्तवर्णं भवेदेकं द्वितीयं नीलवर्णकम् ॥ २० ॥
पुटान्ते लोचने यस्य मासायुः स प्रकीर्त्तितः।
स्यातां नीले हि नेत्रान्ते लेखे द्विमासजीविनः ॥ २१ ॥

नीलपीते च नेत्रान्ते स्यातां त्रिमासजीविनः।
चतुर्मासायुषो लेखा नेत्रान्ते बहुवर्णकाः॥ २२॥
षण्मासजीविनोऽश्वस्य नेत्रान्ते बहुबिन्दवः।
सप्तमासायुषो नीले नेत्रे स्यातां हि वाजिनः॥ २३॥
दशमासायुषोऽश्वस्य नेत्रयोर्वर्णव्यत्ययः।
नासानिकटनेत्रान्ते प्रसार्य्याश्वस्य लक्षयेत्॥ २४॥
दृष्टी रूक्षा सिता वातात् पित्तात् पीतारुणप्रभा।
कफात् श्वेता जलार्द्रा च पीताभा च ज्वरागमे॥ २५॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
स्वस्थारिष्टे त्रयोविंशोऽध्यायः।

---

## अथ चतुर्विंशोऽध्यायः।

### वेधारिष्टः।

अकस्माद् यदि वाहानामेकरूपा भवेद्रुजा।
म्रियते च यदा क्षिप्रमुपसर्गं तदादिशेत्॥ १॥
निदानञ्चैव चिह्नञ्च वक्ष्ये तस्य यथाक्रमम्।
शरत्काले शुचौ वापि ऋतुसन्धौ च जायते॥ २॥
कदाचित् कस्मिन् देशे सविषो वहति मारुतः।
तस्मादपि च वाहानामङ्केभ्यस्तु प्रजायते॥ ३॥

### निदानलक्षणम्।

निदानेभ्यः समासेन वक्ष्यामस्तानि साम्प्रतम्।
शरत्काले तथा ग्रीष्मे वाहानां रवितापतः॥ ४॥
उपसर्गश्च वेधाख्यो जायते नात्र संशयः।
शालाभावे च वाहानां प्रावृषि जायते मलात्॥ ५॥
मशदंशकदोषाच्च चिन्तादेरुपयोगतः।

उपसर्गस्तु वेधाख्यो जायतेऽश्वस्य दारुणः ॥ ६ ॥
उपसर्गे समुत्पन्ने एतद्भवति लक्षणम्।
अधोमुखाश्च दीनाश्च सज्वराः श्वासकासिनः ॥ ७ ॥
स्तब्धाङ्गा विकृताः क्षामाः पीड़ार्त्ताश्चास्रमूत्रिणः।
आमावृतपुरीषाश्च तथा शुष्कपुरीषिणः ॥ ८ ॥
अतिसारं सरक्तञ्च कदाचित् कुरुते हयः।
शूनाः पश्चिमपादाश्च शूनाश्च वृषणोदराः ॥ ९ ॥
सतिग्ममनसो जातु दुर्मनासो भवन्ति च।
धृतिं नैवाधिगच्छन्ति स्थाने वा शयनेऽपि वा ॥ १० ॥
भोजनं यवसं तोयं नैवाश्नन्ति च खादनम्।
कीर्य्यन्ते मक्षिकाभिश्च साश्रुनेत्रा भवन्ति च ॥ ११ ॥
मन्दाग्नयश्च जायन्ते बलतेजो विवर्जिताः।
न सहन्त्यातपं सौरं हयाश्छायानिषेविणः ॥ १२ ॥
चन्द्रे प्रकाशमाने तु हयान् मुक्त्वा तु रक्षयेत्।
आतपाशङ्कया छायां सवेधो याति निश्चयम् ॥ १३ ॥

वेधारिष्टचिकित्सा।

एतानि लक्षणान्येव सवेधानां भवन्ति वै।
उपसर्गे तु सञ्जाते शान्तिकर्मणि कारयेत् ॥ १४ ॥
नीराजनविधानन्तु कर्त्तव्यं पूर्वनोदितम्।
अश्वरक्षाविधानाय ऋचा साम्ना च पाठकः ॥ १५ ॥
जुहुयाज्ज्वलनं विप्रस्तुरङ्गाणां हितेच्छया।
अथर्वविहितां शान्तिं गान्धर्वीं वा प्रयोजयेत् ॥ १६ ॥
नदीपारञ्च नीत्वाश्वान् स्थापयेच्च पृथक् पृथक्।
कदाचिद् दैवयोगेन शान्तिकर्म फलेन वा ॥ १७ ॥
प्रशमं यान्ति वाहानां उपसर्गाः सुदारुणाः।
तैलपानं तथाभ्यङ्गं घृतपानं तथैव च ॥ १८ ॥

सप्ताहत्स्याहरेद् यस्तु स जीवेन्नात्र संशयः ।
शिंशपासारनिर्यासमष्टवर्गांस्तथैव च ॥ १९ ॥
द्वौ चारौ कटुका चोया लवणं गजपिप्पली ।
त्रिकटु त्रिफला चैव त्रिजातं हिङ्गुरेव च ॥ २० ॥
एतानि समभागानि पिष्ट्वा पिण्डं प्रदापयेत् ।
दीप्यते तस्य कायाग्निर्वेधश्चैवोपशाम्यति ॥ २१ ॥
उत्क्षिप्तवङ्क्षणः स्तब्धश्वासमन्दाग्निरश्रुवान् ।
दुर्गन्धो मक्षिकाक्रान्तो ध्यायी चाश्वो न जीवति ॥ २२
जीवेत् पक्षन्तु तुरगो बली मासञ्च जीवति ।
जीवेत् संवत्सरं वापि न तु रोगात् प्रमुच्यते ॥ २३ ॥
प्रावृषः पूर्वकाले तु सद्यो दद्याद्विचक्षणः ।
नोचेज्ज्वरातुरो ह्यश्वः कार्त्तिके मासि जायते ॥ २४ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
वेधारिष्टे चतुर्विंशोऽध्यायः ।

---

## अथ पञ्चविंशोऽध्यायः ।

### कीटारिष्टः

कीटनिदानलक्षणं ।

कीटवेधं प्रवक्ष्यामि यथाशास्त्रं समासतः ।
शरन्निदाघयोश्चैव वाहानां घर्मसेवनात् ॥ १ ॥
वाजिनां कीटवेधस्तु भवेन्मिथ्योपचारतः ।
घनकाले च तोयानां सेवनाच्छालया विना ॥ २ ॥
कीटकाण्डास्तदाश्वानां भवन्ति जठरे स्थिराः ।
ज्येष्ठशुक्लद्वितीयायां तेभ्यः कीटा भवन्ति च ॥ ३ ॥

चिकित्सा ।

तेषाञ्च प्रतिघाताय कुर्य्याद्विद्वान् प्रतिक्रियाम् ।
महानिम्बपलाशानां वीजैः सक्तमिश्रतुभिः ॥ ४ ॥
तस्मिन्नेव दिने पिण्डं दद्याद्बुद्धिमतां वरः ।
अनुपानं तदा दद्याद् द्रवं रोहिणिकोद्भवम् ॥ ५ ॥
एवं कीटा न जायन्ते हयानामुदरे ध्रुवम् ॥ ६ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
कीटारिष्टे पञ्चविंशोऽध्यायः ।

---

## अथ षड्‌विंशोऽध्यायः ।

### मृगरोगः ।

नासासन्धानसंयुक्ता जायन्ते भूय्युपद्रवाः ।
नित्यं घासाभिलाषी च हीयते बलमांसयोः ॥ १ ॥
मृगरोगः स विख्यातो व्याधिः कष्टचिकित्सितः ।
षण्मासाभ्यन्तरे वाथ परलोकं प्रयाति च ॥ २ ॥
बहुदुःखी भवेदश्वो मृगरोगप्रपीड़ितः ।
यावदुच्छ्वसते जन्तुस्तावत् कुर्य्यात् प्रतिक्रियाम् ॥ ३ ॥

चिकित्सा ।

कदाचिद्दैवयोगेन विनष्टश्चापि जीवति ।
पञ्चमूलस्य निःक्वाथे जाङ्गलैः साधितो रसः ॥ ४ ॥
रसः पाने प्रदातव्यः शालिभक्तञ्च भोजनम् ।
कदाचिद्दैवयोगेन भर्त्तुः पुण्यफलेन वा ॥
प्रशमं याति वाहानां मृगरोगः सुदारुणः ॥ ५ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
मृगरोगे षड्‌विंशोऽध्यायः ।

## अथ सप्तविंशोऽध्यायः।

### वातादिकोपः।

#### प्रकोपनिदानवचने।

तिक्तरूक्षकषायाणां द्रव्याणामुपयोगतः।
निराहारात् श्रमाहारात् प्रकोपो मातरिश्वनः॥ १॥
सन्तापाच्च श्रमाच्चापि कट्‌वम्ललवणाशनात्।
प्रकोपं याति पित्ताख्यो दोषो देहव्यवस्थितः॥ २॥
गुरुभिर्मधुरैः स्निग्धैरभिष्यन्दकरै रसैः।
सेवितैः श्लेष्मणां वृद्धिर्भवेच्चापि श्रमं विना॥ ३॥
प्रावृट्काले विकाले च हेमन्ते च विशेषतः।
वायोर्वृद्धिः समुद्दिष्टा जीर्णे चैवाशने तथा॥ ४॥
शरत्काले निदाघे च जीर्य्यमाणे च भक्षिते।
मध्याह्ने चार्द्धरात्रे च पित्तोद्रेकं समादिशेत्॥ ५॥
शिशिरे च वसन्ते च भुक्तवत्सु च तत्क्षणात्।
वाजिनः श्लेष्मणः कोपः प्रभाते च प्रकीर्त्तितः॥ ६॥
विपर्य्ययं निदाघस्य वातादीनां विचक्षणैः।
हानिर्वाच्या सदा वैद्यैः शास्त्रमार्गानुसारिभिः॥ ७॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
वातादिप्रकोपे सप्तविंशोऽध्यायः।

---

## अथ अष्टाविंशोऽध्यायः।

### व्याधिनिर्देशः।

मुखरोगोऽक्षिरोगश्च शिरोरोगश्च लिङ्गितः।
कर्णरोगश्च कासश्च श्वासो हिक्का व्रणस्तथा॥ १॥

सिध्माख्यः कोष्ठरोगश्च पदरोगो ज्वरस्तथा।
अजीर्णश्चातिसारश्च शूलोदावर्त्त एव च ॥ २ ॥
प्रस्कन्नः कृमिकोष्ठश्च मूत्रकृच्छ्रलरुक् तथा।
कुष्ठरोगश्च शोथश्च अण्डीनीतोदराश्मसः ॥ ३ ॥
उत्कर्णकोऽर्दितश्चैव मन्यास्तम्भो हनुग्रहः।
आक्षेपो मृगजृम्भश्च मन्याचालीमृगस्तथा ॥ ४ ॥
कपोतको निशादश्च तथाचैकाङ्गसङ्गकः।
रोगः पृष्ठग्रहो नाम भ्रामितावस्तथैव च ॥ ५ ॥
उन्मादो ग्रहदोषश्च शोषो वातबलासकः।
व्यापदो लवणैर्धान्यैः सुरया पयसा तथा ॥ ६ ॥
विषापस्मारदोषौ च षट्पादो लक्षणं तथा।
इत्ययं व्याधिनिर्देशः कृतः शास्त्रार्थतत्त्वतः ॥ ७ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे व्याधिनिर्देशो-ऽष्टाविंशोऽध्यायः ॥ २८ ॥

---

# अथ एकोनत्रिंशोऽध्यायः।

## मुखरोगः।

उपकुशस्तथा लेशो जिह्वास्तम्भस्तथैव च।
अलावूकः प्रसूनश्च दन्तरोगो गलग्रहः ॥ १ ॥
मुखपाकोऽधिदन्तश्च रोहिणी चोपजिह्विका।
गण्डरोगौष्ठरोगौ च गलशालूक एव च ॥ २ ॥
इत्येते वाजिनां रोगा मुखजाः परिकीर्त्तिताः।
एषां निदानं वक्ष्यामि चिकित्साञ्च यथाक्रमम् ॥ ३ ॥

## मुखरोगनिदानलक्षणे।

समेभ्यो दन्तमांसेभ्यो यस्य निर्य्याति शोणितम्।
चलदन्तस्य वाहस्य विद्यादुपकुशं भिषक्॥ ४॥
हनुदेशे यदा दन्तो भवत्यभ्यन्तराश्रयः।
आलेश इति तं विद्यात् श्लेष्मरक्तसमुद्भवम्॥ ५॥
तेनाश्वो दुर्मनात्यर्थं मन्दं पिबति खादति।
जर्जरं कासते चैव बलाच्च परिहीयते॥ ६॥
शूना यस्य भवेज्जिह्वा वाजिनः स्फोटकैर्युता।
प्रक्लिन्ना वापि यस्यैव जिह्वा स्तम्भीति तं विदुः॥ ७॥
मुखं दुर्गन्धिकं चैव तालुकः शूनको भवेत्।
ग्रासविद्वेषिणोऽश्वस्य रोगं विद्याद्‌लावुकम्॥ ८॥
श्यावौष्ठतालुवक्त्रो वा मन्दाहारे तथैव च।
संशीर्णे दन्तमांसे च प्रशूनं व्याधिमादिशेत्॥ ९॥
हन्वोश्चैव तथा गण्डे श्वयथुर्यस्य जायते।
जिह्वामूले गले चापि तस्य विन्द्याद्गलग्रहम्॥ १०॥
सृक्वौष्ठतालुदेशेषु व्रणं यस्योपजायते।
विवर्णन्तु मुखं दुष्टं मुखपाकं तमादिशेत्॥ ११॥
दन्तानामुपरिष्टात्तु यदा दन्तस्य सम्भवः।
अधिदन्तः स विख्यातो मन्दाहारस्य वाजिनः॥ १२॥
यस्य शूनात्त्रिकूटस्य गले शोथः प्रलम्बते।
यवमर्द्दिषिणोऽश्वस्य रोहिणीरोगमादिशेत्॥ १३॥
अधस्तादथ जिह्वायाः श्वयथुर्यस्य जायते।
तं विन्द्यादुपजिह्वाख्यं मुखरोगन्तु वाजिनाम्॥ १४॥
अधिजिह्वाभिधानन्तु उपरिष्टाद् विनिर्दिशेत्।
गण्डाभ्यन्तरगे गण्डो गण्डराग इति स्मृतः॥ १५॥
सव्रणः पिडकाकीर्णः ओष्ठ उच्छून एव च।

स्फुटितः कठिनश्चैव ओष्ठरोगोऽभिधीयते ॥ १६ ॥
गलाभ्यन्तरशोथेन श्वासमुद्गिरते हयः।
गलशालूकिनं विन्द्यात् कासार्त्तञ्च तुरङ्गमम् ॥ १७ ॥
सर्वेषां मुखरोगानां सम्भवः श्लेष्मशोणितम्।
चिकित्सां तेषु वक्ष्यामि येन शाम्यन्ति वाजिनाम् ॥ १८ ॥

मुखरोगचिकित्सा।

विध्यात्तालुशिरां पूर्वं तुरङ्गस्य विचक्षणः।
अधिमांसं ततो विध्याद्वग्राहृत्तास्यस्य शस्त्रकैः ॥ १९ ॥
जिह्वास्तम्भे तु जिह्वायाः प्रक्षालं कारयेद्भिषक्।
प्रतिसार्य्याश्वजिह्वान्तु लवणैः कटुचूर्णकैः ॥ २० ॥
वेधकालात् समारभ्य रात्रिमेकां न दापयेत्।
वासयन्तेन वाहस्य निवातस्थस्य बुद्धिमान् ॥ २१ ॥
प्रतिपानं प्रभाते तु पिप्पलीशृङ्गवेरकैः।
पुनर्णवा वचाशिग्रुकरञ्जानिम्बपत्रकान् ॥ २२ ॥
त्रायमाणा विड़ङ्गैश्च किञ्चिल्लवणसंयुतैः।
सुरया दापयेत् सम्यग् घासं शुष्कं तथैव च ॥ २३ ॥
करञ्जनिम्बपत्राणां क्वथितञ्च सुसंस्कृतम्।
भोजयेत्तिक्तमुद्गांश्च तैलत्रिकटुकान्वितान् ॥ २४ ॥
मृदुभिर्दन्तकाष्ठैश्च कटुचूर्णावचूर्णितैः।
गवां मूत्रेण तेषान्तु मुखप्रक्षालनं हितम् ॥ २५ ॥
शृङ्गवेरेण पिप्पल्या वचया सर्वपार्द्रकैः।
हितं प्रलेपं कुर्वीत शोथेषु च विचक्षणः ॥ २६ ॥
त्रिफलाक्वाथयुक्तस्य हितं पानञ्च गुग्गुलोः।
यवांश्च खादने दद्यान्माषादींश्च विवर्जयेत् ॥ २७ ॥
अधिदन्तन्तु सन्दंशैः कर्षयित्वा विचक्षणः।
चिकित्सां पूर्वमुद्दिष्टां कुर्वीत तदनन्तरम् ॥ २८ ॥

कृमिभिर्भक्ष्यमाणानां दन्तानामुपकर्षणम्।
अधिदन्ते च कुर्वीत आलेपञ्च विचक्षणः॥ २९॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे मुखरोगे एकोनत्रिंशोऽध्यायः॥ २९॥

---

## अथ त्रिंशोऽध्यायः।

### अक्षिरोगः।

अथातः संप्रवक्ष्यामि नेत्ररोगविनिश्चयम्।
पूर्वशास्त्रानुसारेण मुनिभिः कीर्त्तितं यथा॥ १॥
तोयस्रावः प्रसन्नान्धो नक्तान्धस्तिमिरस्तथा।
मुञ्जको मुञ्जजालश्च पटलं वुद्बुदस्तथा॥ २॥
पूयस्रावश्च काचाख्यो रक्तस्रावस्तथैव च।
चिपिटो वर्त्मरोगश्च अभिष्यन्दस्तथैव च॥ ३॥
वातपित्तकफैर्दुष्टैर्नेत्ररोगा भवन्त्यमी।
लिङ्गं चिकित्सितं तेषां प्रवक्ष्याम्यनुपूर्वशः॥ ४॥

वातिकाक्षिरोगनिदानलक्षणानि।

अजस्रं पश्यतां व्यश्रु स्वच्छं स्रवति चक्षुषः।
तोयस्रावीति तं विन्द्याद्विकारं मारुतात्मकम्॥ ५॥
शुद्धन्तु चक्षुषा रूपं नैव पश्यति यो हयः।
प्रसन्नान्धः स विज्ञेयो न तु शक्यश्चिकित्सितुम्॥ ६॥
दिवा पश्यति यः स्वच्छं रात्रौ चैव न पश्यति।
नक्तान्ध इति तं विद्याद्विकारं पवनोद्भवम्॥ ७॥
कदाचिद्वीक्षते रूपं कदाचिच्च न वीक्षते।
तिमिरं तं विजानीयाल्लिङ्गेनानेन बुद्धिमान्॥ ८॥

तच्चिकित्सा।

घृतं पक्कं प्रदातव्यं देयञ्च त्रिफलान्वितम्।
सन्तर्पणञ्च कुर्वीत नेत्रयोस्तदनन्तरम्॥ ९॥
निपात्य भूमौ तुरगं दृढं बद्धा सुयन्त्रितम्।
माषचूर्णस्य कल्केन परिवार्य्याक्षि सर्वतः॥ १०॥
घृतेन पयसा वापि पूरयेत्तं विचक्षणः।
विधिरेष समुद्दिष्टो नेत्रसन्तर्पणः सदा॥ ११॥
अपरश्च सुखोपायो विधिः सन्तर्पणः स्मृतः।
तूलं स्नेहेन सम्भाव्य नयनाभ्यन्तरे क्षिपेत्॥ १२॥
तस्योपरि स्लथं पट्टं बध्नीयाद्वा दृशोपरि।
बद्धपट्टं पुनर्नेत्रं मुहुः स्नेहेन सेचयेत्॥ १३॥
उत्पलं चन्दनञ्चैव तथा सौवीरकाञ्जनम्।
वर्त्तिं कृत्वा ततः प्राज्ञस्तिमिरं नित्यमञ्जयेत्॥ १४॥
तोयस्रावस्य वाहस्य प्रसन्नान्धस्य वा पुनः।
एतदेवाञ्जनं श्रेष्ठं तिमिरे यत्प्रकीर्त्तितम्॥ १५॥
रसाञ्जनं गुडञ्चैव मधुकं क्षौद्रमेव च।
रजन्या सहिता वर्त्तिर्नक्तान्धस्याञ्जनं परम्॥ १६॥
सप्त कृत्वाष्ट कृत्वा वा शोषयित्वा पुनः पुनः।
भावयेत् कर्पटं क्षौमं क्षीरेणाज्येन बुद्धिमान्॥ १७॥
सुरामण्डेन तद्भूयो भावयित्वा विचक्षणः।
वर्त्तिं कृत्वा घृताभ्यक्तां घृतदीपे प्रदापयेत्॥ १८॥
प्रच्छन्ने ताम्रपात्रेण तं दीपं छादयेन्मनाक्।
तस्मात् कज्जलमादाय ताम्रपात्राद्विचक्षणः॥ १९॥
तोयस्रावं प्रसन्नान्धं नक्तान्धं तिमिरं तथा।
अञ्जयेन्मतिमान् वैद्यः शीषकस्य शलाकया॥ २०॥

पैत्तिकाक्षिरोगलक्षणानि।

अधोमुखस्तु यो वाजी मिलिताक्षस्तथैव च।
शूनाभ्याञ्चैव नेत्राभ्यामुष्णमश्रु विमुञ्चति॥ २१॥
लोचनं काचसङ्काशं यस्याकस्मात् प्रजायते।
काचं पित्तात्मकं रोगं तस्य विद्वान् समादिशेत्॥ २२॥
लोहितं पित्तकञ्चैव हरितं नीलकं तथा।
पित्तनिष्यन्दिनोऽश्वस्य नेत्रमाशु प्रजायते॥ २३॥

तच्चिकित्सितम्।

प्रपौण्डरीकं मधुकं चन्दनं लोध्रमेव च।
एकीकृत्य जले न्यस्तं नेत्रस्योत्तानमुत्तमम्॥ २४॥
यष्टीमधुकयुक्तस्य परिषेकाय गोपयः।
चन्दनोशीरतोयैश्च पानं दद्यात् सयष्टिकैः॥ २५॥
अश्रुपाते शिरावेधो हितश्चापि हि कीर्त्तितः।
गैरिकं मधुकं शङ्खं लोध्रमुत्पलमेव च॥ २६॥
आमलक्या रसेनैतत् समभागं तथैव च।
शिलामालिप्य संशोष्य तत्कल्कं चूर्णयेदधः॥ २७॥
स्रोतोऽञ्जनं समं दद्यात्तत्पित्ताय न मारयेत्।
जम्बूककुभशाखानामामलक्या वटस्य च॥ २८॥
पुष्पाण्युद्धृत्य सर्वेषां यथाप्राप्तानि वा पुनः।
फलानि वा समाहृत्य कल्कं कृत्वा विचक्षणः॥ २९॥
भोजयेद् घृतमध्वाक्तं कटुकाम्लञ्च वर्जयेत्॥ ३०॥

प्रचारलक्षणचिकित्सितम्।

प्रच्छादयति यद् दृष्टिं मांसं पर्य्यन्तवर्द्धितम्।
प्रचारकाख्यं तं विन्द्यान्नेत्ररोगं कफात्मकम्॥ ३१॥
क्षितौ निपात्य तुरगं ततो नेत्रं प्रसारयेत्।
कृतकर्मा भिषग्विद्वान् वड़िशेनाक्षिवर्त्मनि॥ ३२॥

ततस्तीक्ष्णेन शस्त्रेण छिन्द्यात्प्रावरकं बुधः।
तारकस्य यथा पीड़ा जायेत न मनागपि ॥ ३३ ॥
शुक्लं तत् पूरयेन्नेत्रं मधुना सैन्धवेन वा।
प्रक्षाल्य चोत्थाप्य ततः शङ्खजां वेधयेच्छिराम् ॥ ३४ ॥
कुष्ठेन वचया चव्या तथा त्रिकटुकेन च।
प्रतिपानं प्रदातव्यं सुरया लवणैः सह ॥ ३५ ॥
निर्वातं विहितं स्थानं ग्रासे दूर्वा च पूजिता।
गुरु भक्ष्यं न दातव्यं मधुरञ्च विशेषतः ॥ ३६ ॥

काचलक्षणचिकित्सा।

श्लेष्माभिष्यन्दिनोऽश्वस्य शूनं साश्रु विलोचनम्।
काचः सञ्जायतेऽश्वस्य पाण्डुता चापि चक्षुषः ॥ ३७ ॥
पिप्पलीञ्चैव लोध्रञ्च तथा कटुकरोहिणीम्।
त्रिफलां पिचुमर्दञ्च गवां मूत्रेण साधयेत् ॥ ३८ ॥
तेन पादावशेषेण क्षौद्रयुक्तेन बुद्धिमान्।
गालितेन सुखोष्णेन सेचयेद्वाजिलोचनम् ॥ ३९ ॥
कटुतैलं कषायेण पाचितं चाम्बुनैव तु।
विड़ङ्गकल्कसंयुक्तं नस्यार्थे च प्रकीर्त्तितम् ॥ ४० ॥
गैरिकं शृङ्गवेरञ्च अञ्जनं वृहतीफलम्।
मरिचं पिप्पली चैव विड़ङ्गं सैन्धवं तथा ॥ ४१ ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्।
संस्थाप्य भाजने ताम्रे गवां मूत्रेण भावयेत् ॥ ४२ ॥
बहुशो भावयित्वा तु पुनः श्लक्ष्णं प्रपेषयेत्।
चूर्णाञ्जनमिदं श्रेष्ठं नेत्ररोगे कफात्मके ॥ ४३ ॥

रक्तजाक्षिरोगलक्षणानि।

रक्ताभिष्यन्दिनोऽश्वस्य नेत्रं भवति लोहितम्।
सर्वं त्रिभागमर्द्धं वा स्रावकण्ड्वादिपीड़ितम् ॥ ४४ ॥

रक्तस्रावोऽथवा यस्य वाजिनो लोचनाद्भवेत् ।
रक्तस्रावाभिधानन्तु नेत्ररोगं समादिशेत् ॥ ४५ ॥
अभिघातोद्भवोऽश्वस्य नेत्ररोगः प्रकीर्त्तितः ।
शिरःशस्त्राभिघातश्च रक्तसन्धिश्च षण्डकः ॥ ४६ ॥

तच्चिकित्सा ।

चिकित्साञ्चैव वक्ष्यामि यथादृष्टां समासतः ।
येन शाम्यन्ति वाहानां रक्तजाश्चक्षुषो रुजः ॥ ४७ ॥
ऐन्द्रीं तालीशपत्रञ्च मञ्जिष्ठां मधुकं निशाम् ।
कालानुसारिवां मूर्वां वारिणा सह साधयेत् ॥ ४८ ॥
तेन शीतेन सिक्तेन नेत्रमाश्वशोतयेद् भिषक् ।
वर्त्यञ्जनमिदं कुर्य्याद् यथादृष्टमतन्द्रितः ॥ ४९ ॥
विभीतकफलं लोध्रं काश्मर्य्याश्च फलं तथा ।
मधुकं शर्करा चैव गैरिकं सरसाञ्जनम् ॥ ५० ॥
एतानि समभागानि क्षौद्रेण सह योजयेत् ।
हन्याद्दाहञ्च रक्तञ्च वर्त्तिरेषा जलान्विता ॥ ५१ ॥
मञ्जिष्ठां हरितालञ्च लोध्रं वालकमेव च ।
रेणुकञ्च तथा कुष्ठमुशीरञ्च मनःशिलाम् ॥ ५२ ॥
पेषयित्वोदकेनैव छायायां परिशोषयेत् ।
जलघृष्टेयमश्वस्य वर्त्तिर्नेत्ररुजापहा ॥ ५३ ॥

पटललक्षणम् ।

अधस्तादुपरिष्टाद्वा पटलं यस्य जायते ।
रुणद्धि नयने सद्यः तथा नैव क्रमेण च ॥ ५४ ॥
हरितं नीलकं पित्ताद् वाताद्वा लोहितं भवेत् ।
ईषत्पीतं घनं शुक्लं पटलं श्लेष्मसम्भवम् ॥ ५५ ॥
सङ्कीर्णवर्णं विज्ञेयं सन्निपातसमुद्भवम् ।
असाध्यं तं विजानीयात् कृच्छ्रसाध्यमथापि वा ॥ ५६

कृष्णाञ्च रक्तजं विद्यात् पटलं शास्त्रकोविदः ।
अत ऊर्द्धं प्रवक्ष्यामि यथायोगं चिकित्सितम् ॥ ५७ ॥

तच्चिकित्सा ।

पटलेषु च सर्वेषु शिरोवेधः प्रशस्यते ।
अश्रुपाते प्रपाणे च ललाटे चैव शङ्खयोः ॥ ५८ ॥
श्लेष्मजस्य हितं दृष्टमञ्जनं मधुसैन्धवम् ।
पटलस्य गवां मूत्रं चौद्रयुक्तञ्च सैन्धवम् ॥ ५९ ॥
तुत्थकं सैन्धवं चैव हरितालं मनःशिलाम् ।
गवां मूत्रेण संपिष्य मरिचञ्च विचक्षणः ॥ ६० ॥
अञ्जयेत् कफजां प्राज्ञो मधुना पटलं भिषक् ।
पटले मांसकीले च चूर्णमेतत् प्रदापयेत् ॥ ६१ ॥
एष एव प्रदातव्यो वातिके घृतसंयुतः ।
पैत्तिके रक्तजे चैव अत ऊर्द्धं क्रियां शृणु ॥ ६२ ॥
प्रपौण्डरीकं मधुकं शङ्खं मुक्ता प्रवालकम् ।
एतानि समभागानि जले पिष्ट्वा विचक्षणः ॥ ६३ ॥
वर्त्तिं कृत्वा ततश्चैव शोधयेत्तां विनातपम् ।
ततस्तां सलिलैः पिष्ट्वा अञ्जयेत् पटलं भिषक् ॥ ६४ ॥
त्रिफलां सघृताञ्चैव रक्तपित्तसमुद्भवे ।
पटले पाययेदश्वं त्रिकाले चैव बुद्धिमान् ॥ ६५ ॥
वर्त्मजं मांसकीलञ्च पिण्डकञ्चैव शस्त्रकैः ।
उत्कृत्य लोध्रचूर्णेन अञ्जयेत् सैन्धवेन च ॥ ६६ ॥

मुञ्जजालचिकित्सा ।

एकेन मुञ्जमाख्यातं बहुभिर्मुञ्जजालकम् ।
कृमिभिः पटलान्तःस्थे विन्द्यात्तत्तु जाद्वयम् ॥ ६७ ॥
प्रथमं तैलवर्णाभं द्वितीयं स्फटिकप्रभम् ।
रक्ताभञ्च तृतीयञ्च चतुर्थं तैलमुच्यते ॥ ६८ ॥

प्रथमं पटलं साध्यं द्वितीयञ्च तथा भवेत्।
तृतीयं कृच्छ्रसाध्यं स्याच्चतुर्थं नैव सिध्यति॥ ६९॥

तच्चिकित्सा।

पातयित्वा हयं भूमौ कृत्वा चैव सुयन्त्रितम्।
वर्त्मनी वेधयेत् सूच्या सूत्रे नेत्रं प्रसारयेत्॥ ७०॥
कर्पटेनाश्रुवेगन्तु शुष्केणैवापकर्षयेत्।
स्थापयेद्वाजिनं तन्तु प्रत्यादित्यं विचक्षणः॥ ७१॥
शस्त्रं सूत्रेण संवेष्ट्य तीक्ष्णमात्रन्तु कारयेत्।
कृष्णशुक्लाम्बरधरो वेधयेद्वाजिलोचने॥ ७२॥
अङ्गुष्ठेन ततो नेत्रं पीड़यित्वा समाहितः।
मुञ्जकं कर्षयित्वा तु जले क्षिप्रं प्रकाशयेत्॥ ७३॥
मुञ्जमुद्धृत्य नेत्रन्तु गोमूत्रेणाऽवसेचयेत्।
क्षौद्राज्यं पूरितं कृत्वा श्लथवस्त्रेण वेष्टयेत्॥ ७४॥
वहिःप्रलेपं कुर्वीत पञ्चवल्कलकेन तु।
कल्केन घृतयुक्तेन त्र्यहात् पट्टं विमोचयेत्॥ ७५॥
मुञ्जकोक्तविधिः सर्वो मुञ्जजाले विशस्यते।
रूढ़व्रणे ततः कुर्य्यात् पूर्वोक्तां पटलक्रियाम्॥ ७६॥
प्रपौण्डरीकं मधुकं तथा लोहितचन्दनम्।
एभिः कल्कीकृतैस्तैलं पाचितं त्रिफलाम्भसा॥ ७७॥
नस्यं देयमशुद्धे तु तथाचैवोपतर्पणम्।
पिप्पली सैन्धवं शुण्ठी गैरिकं वरुणत्वचः॥ ७८॥
गवोष्ट्रदशनाश्चैव फेनश्चोदधिकस्तथा।
क्षौद्रपिष्टैः समैरेभिरञ्जनं मुञ्जनाशनम्॥ ७९॥

वर्त्मकुन्दचिकित्सा।

विभीतकास्थिसारेण मधुयुक्तेन चाञ्जनम्।
चक्षुषो यस्य वाहस्य पूयस्रावो विजायते॥ ८०॥

वर्त्मकुन्देति यस्य स्यात्तस्य कुर्य्यात् क्रियामिमाम्।
शङ्खे चैवास्रुपाते च ललाटे वेधयेच्छिराम्॥ ८१॥
त्रिफलायाः कषायेण लोध्रयुक्तेन सेवितम्।
सेचयेत् सततं वैद्यः प्रलेपश्चैव कारयेत्॥ ८२॥
पद्मवल्कलकल्केन चौद्रयुक्तेन बुद्धिमान्॥ ८३॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
नेत्ररोगे त्रिंशोऽध्यायः।

---

## अथ एकत्रिंशोऽध्यायः।

### वातिकशिरोरोगचिकित्सा।

वातात् पित्तात् कफाच्चैव सन्निपाताच्च लोहितात्।
अभिघाताच्च निर्दिष्टः शिरोरोगस्य सम्भवः॥ १॥
अधोमुखस्य दीनस्य मन्दाहारस्य वाजिनः।
सततं प्रोथमानस्य हृष्टरोमस्य बुद्धिमान्॥ २॥
स्पन्दमानेन शिरसा जानीयाद्वातसम्भवम्।
स्पन्दमानं शिरस्तत्र हस्तस्पर्शेन लक्षयेत्॥ ३॥
शङ्खतालुकयोश्चैव शिरामन्यागतां तथा।
वेधयित्वा ततः कुर्य्यात् पात्रे तैलावसेचनम्॥ ४॥
अतिविषया पिप्पल्या वचया लवणेन च।
सुरसायाश्च पत्रेण प्रतिपानं सुरान्वितम्॥ ५॥
हितं तस्मै प्रदातव्यं भोजनञ्च रसोदकम्।
तिलतैलेन संयुक्तं स्वल्पं त्रिकटुकान्वितम्॥ ६॥

### पैत्तिकशिरोरोगचिकित्सा।

श्वासस्तृष्णा तथा स्वेदः शूनभावोऽपि वर्त्मनोः।
अत्युष्णता गुरुत्वञ्च शिरसो यस्य जायते॥ ७॥

अधोमुखस्य वाहस्य निद्रालस्यं तथा नृणाम्।
पित्तोद्भवं शिरोरोगं जानीयान् मतिमान् भिषक्॥ ८॥
शङ्खादिकं शिरावेधं पूर्वोक्तञ्चैव कारयेत्।
शिरोऽभ्यङ्गो हितस्तस्मै शतधौतेन सर्पिषा॥ ९॥
प्रपौण्डरीकं मधुकं चन्दनोशीरपद्मकैः।
एभिः कल्कीकृतैस्तस्य शस्तं मूर्ध्नि प्रलेपनम्॥ १०॥
क्षीरेण साधितं सर्पिर्मधुकोशीरपद्मकैः।
एभिः कल्कीकृतैर्देयं तस्य नासावसेचनम्॥ ११॥
तिक्तमुद्गान् घृतान् भक्तान् भोजनं तस्य दापयेत्।
घासे दूर्वार्जुनो वापि तथा शालेश्च पल्लवान्॥ १२॥

श्लैष्मिकशिरोरोगचिकित्सा।

मुखेन नामयोर्वापि यः श्लेष्माणं प्रमुञ्चति।
दीनोऽतीव गुरुशिरा मेदसा शूनतालुकः॥ १३॥
तस्य विद्यात् कफोत्थन्तु शिरोरोगं विचक्षणः।
तालुकं वेधयेत्तस्य शिरां शङ्खादिकान्तथा॥ १४॥
विडङ्गं कटुचूर्णञ्च तिक्तवार्त्ताकुमेव च।
पिष्ट्वा क्षीरेण छागेन नस्यं तेनैव दापयेत्॥ १५॥
नागरं शतपुष्पञ्च तगरञ्च हरेणुकम्।
कल्कं कृत्वा गवां मूत्रे पचेत्तैलं विचक्षणः॥ १६॥
तेन नस्यं प्रदातव्यं निम्बमुद्गस्य भोजनम्।
सुखोष्णं तस्य कर्त्तव्यं क्षौद्रं त्रिकटुकान्वितम्॥ १७॥

सान्निपातिकशिरोरोगचिकित्सा।

सङ्कीर्णलक्षणं विद्यात् सन्निपातसमुद्भवम्।
असाध्यं तं विजानीयात् कृच्छ्रसाध्यमथापि वा॥ १८॥
शिरावेधं प्रकुर्वीत पूर्वोक्तं तत्र पण्डितः।
प्रतिपानञ्च दातव्यं सुरया वक्ष्यमाणकम्॥ १९॥

सुरदारु हरिद्रे द्वे पिप्पली शृङ्गवेरकम्।
प्रपौण्डरीकं मधुकं पत्राणि सुरसस्य च ॥ २० ॥
श्रीवासकं सर्जरसं त्वचं कुष्ठं हरेणुकम्।
घृतेन योजयित्वा तु नासाधूमं प्रदापयेत् ॥ २१ ॥
भोजनं तिक्तमुद्गैश्च पूर्वोक्तैर्मधुसर्पिषा।
असाध्योऽयं प्रवक्तव्यो विधिरश्वहितैषिणा ॥ २२ ॥

रक्ताभिघातशिरोरोगचिकित्सा।

कटुकैर्लवणैरम्लै रसैरत्यन्तसेवितैः।
रक्तं कुपितमश्वस्य शिरोरोगाय जायते ॥ २३ ॥
शूननासात्रिकूटस्तु रक्तनेत्रः सुदुर्मनाः।
कदाचिद् दृश्यते तस्य रक्तं नेत्राद्विनिर्गतम् ॥ २४ ॥
रक्तजं तस्य जानीयात् शिरोरोगं विचक्षणः।
अभिघातसमुत्थस्य लक्षणं प्रवदाम्यहम् ॥ २५ ॥
काष्ठलोष्टप्रहारैस्तु शिरो यस्याभिहन्यते।
स्तब्धकर्णो गुरुशिरा भवेद्वाजी सुदुर्मनाः ॥ २६ ॥
पित्तजे या क्रिया प्रोक्ता शिरावेधादिका मया।
रक्तजे सा प्रयोक्तव्या तथा चैवाभिघातजे ॥ २७ ॥
प्रोथतेऽन्तःशिरो यस्य यस्य नासासमुद्भवाः।
दृश्यन्ते कृमयश्चापि कृमिजं तस्य निर्दिशेत् ॥ २८ ॥
त्रिकटुञ्च विडङ्गञ्च वार्त्ताकीनां फलानि च।
सुरया मर्दयित्वा तु नस्यं तैलेन दापयेत् ॥ २९ ॥
फलानि बृहतीनाञ्च तिक्तवार्त्ताकुमेव च।
पिष्ट्वा च छागक्षीरेण नस्यं तेनैव दापयेत् ॥ ३० ॥
नागरं शतपुष्पञ्च तगरञ्च हरेणुकम्।
कल्कं कृत्वा गवां मूत्रे तैलं तेनैव पाचयेत् ॥ ३१ ॥
तेन नस्यं प्रदातव्यं तिक्तमुद्गैश्च भोजनम्।

सुखोष्णं तस्य कर्त्तव्यं विड़ङ्गं घृतयोजितम्॥ ३२॥
विड़ङ्गं लसुनं लोध्रं वृहतीनां फलानि च।
कल्कीकृत्य गवां मूत्रैस्तैलं तेनैव पाचयेत्॥ ३३॥
नस्यं दद्यात् सुखोष्णेन तेन तैलेन बुद्धिमान्।
भोजयेत्तिक्तमुद्गैश्च विड़ङ्गघृतयोजितैः॥ ३४॥
इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे शिरोरोगे
एकत्रिंशोऽध्यायः।

---

## अथ द्वात्रिंशोऽध्यायः।

### लङ्घितलक्षणम्।

लङ्घितं द्विविधं प्रोक्तं मुनिभिः शास्त्रशालिभिः।
एकं वातादिभिर्दोषैर्द्वितीयञ्चाभिघातजम्॥ १॥
चिकित्साञ्चैव वक्ष्यामि संक्षेपेण यथाक्रमम्।
पारम्पर्य्येण शास्त्राणां यथा दृष्टं तपोधनैः॥ २॥
उरसा बाहुना चाश्वो जानुजङ्घात्रिकेण च।
कूर्चेन च खुराग्रेण मण्डूक्या चापि लङ्घति॥ ३॥

### चिकित्सा।

अभिघातं विना वाजी यदा दोषेण लङ्घति।
उपवासैस्तु संशोध्य घृतं वै सुरयान्वितम्॥ ४॥
शीतकाले प्रदातव्यं प्रतिपानं प्रदापयेत्।
हरिद्रातिविषालोध्रपिप्पल्या च महौषधैः॥ ५॥
त्रायमाणा वचाकुष्ठमुस्ताकट्फलसैन्धवैः।
प्रतिपानं हितं दृष्टं सुरया सीधुनापि च॥ ६॥
तीक्ष्णशीतं समालोक्य कालं शास्त्रविशारदः।
एवं प्रतिदिनं कुर्य्यात् त्र्यहं सप्ताहमेव च॥ ७॥

अनन्तां वेधयेद्वैद्यः शिरां शस्त्रेण चोरसीम्।
शिरास्रावे कृते चापि यदि नो जायते सुखम्॥ ८॥
तदा वह्निः प्रदातव्यो यथाशास्त्रं विचक्षणैः।
शिंशपापाठमूलैश्च वल्कलैः क्वथितैर्जलैः॥ ९॥
सर्पिस्तैलसमायुक्तो गुग्गुलुर्लङ्घिने हितः।
अभिघातसमुद्भूते क्रियां वक्ष्यामि साम्प्रतम्॥ १०॥
लिङ्गिते मुनिभिः प्रोक्तं वाजिनां हितकाम्यया।
उरसोऽभ्यञ्जनं कार्य्यं शतधौतेन सर्पिषा॥ ११॥
पञ्चवल्कलकल्केन लेपं दद्यान्मुहुर्मुहुः।
एवं प्रतिदिनं कुर्य्यात् सप्ताहञ्चापि सप्तकम्॥ १२॥
निश्चलस्य तुरङ्गस्य पञ्चाहं वा चतुर्गुणम्।
भ्रामयित्वा समं वैद्यस्ततः सम्यक् निरूपयेत्॥ १३॥
तृतीये सप्तके पूर्णे तुरङ्गं शास्त्रकोविदः।
अशुद्धौ पूर्वमुद्दिष्टं शिरावेधादिकक्रमम्॥ १४॥
कुर्य्याद्दृष्टतले वाहे वह्निदाहावसानिकम्।
अभिघातलङ्घिते वै न हितं क्रमणं भवेत्॥ १५॥
कपिकच्छुवलाबालपा रिभद्रकसैन्धवैः।
कपिकच्छुकवाथ्यालं पादशेषव्यवस्थितम्॥ १६॥
आर्द्रसिन्धुहरिद्राणां चूर्णं दत्त्वा तु बुद्धिमान्।
तैलन्तु व्योषचूर्णेन रसवर्ज्जन्तु दापयेत्॥ १७॥
तस्मिन् दिने भोज्यपानं दापयेत्तु मनागपि।
पश्चात्काये लिङ्गिते तु अनुवासस्तु केवलः॥ १८॥
सर्व्वाः प्राक्कायिकाश्चापि चिकित्साः परिकीर्त्तिताः।
सर्वेषु चैव लङ्घेषु अनुवासस्तु केवलः॥ १९॥
सर्वेषु चैव लङ्घेषु समीपे वेधयेत् शिराम्।
उरो लङ्घे चिताश्चैव क्रियाः सर्व्वाः प्रकीर्त्तिताः॥ २०॥

त्रिकलिङ्गीति यः प्रोक्तो हरिर्वातकटिस्तु सः।
औपाङ्गोर्वेधयित्वा तु शिरास्तस्य विचक्षणः॥ २१॥
भोजनञ्च निरूहञ्च सम्यगेव प्रदापयेत्।
तैलैर्वातहरैर्वैद्यस्तथा चाभ्यङ्गमेव च॥ २२॥
त्रिपाञ्च यः स्थितो भूमिं खुराग्रेण स्पृशेद् यदि।
ध्यायते निश्चलो यश्च तं हयं शुद्धमादिशेत्॥ २३॥
अग्रकायेण यो याति स शुद्धः परिकीर्त्तितः।
पश्चात्कायोत्थितश्चाग्रे दृढः प्रोक्तो मनीषिभिः॥ २४॥
निद्रायमाणो यो वाजी निम्नोरस्को भवेद् यदि।
अङ्गुलं द्व्यङ्गुलं वापि स तु ग्राह्यो विचक्षणैः॥ २५॥
अत ऊर्द्ध्वं न गृह्णीयाद् वायोर्बलसमन्वितम्।
अथवाप्यंसकूटेन द्वाभ्यामेकेन वा पुनः॥ २६॥
वेगेन गतिभिश्चैव तुल्यो भवति यो हयः।
स वै वातकटिर्ज्ञेयो न ग्राह्यो बलवानपि॥ २७॥
पुलिनञ्चैव यो वाजी गच्छन् वहते कटिम्।
सोऽपि वाताभिभूतोऽश्वो न योज्यो वाजिकर्मणि॥ २८॥
उरो रक्षति वाहस्य वर्ज्या दृष्ट्वाभिकुञ्चनम्।
कर्णयोर्व्यस्तसंन्यस्तो वाजी वातहतः स्मृतः॥ २९॥
पश्चात्पादं खुराग्रेण भूमौ भ्रश्य तु गच्छति।
तदा किञ्चन वाह्यो वा न योज्यो वाजिकर्मणि॥ ३०॥
प्रध्यायमानो यः पश्चाद्रज्जुमाकृष्य सर्वदा।
वातभुग्नकटिर्वाजी स विज्ञेयो ह्यकिञ्चनः॥ ३१॥
उत्तिष्ठत्यग्रकायेण यो लुठित्वाग्रतो हयः।
पश्चात् पश्चिमकायेन सोऽपि वातहतः स्मृतः॥ ३२॥
वाह्नितं सुदृढं वाहं स्नातं पीतोदकं तथा।
वारितञ्च सुखासीनं ध्यायन्तञ्च निरूहयेत्॥ ३३॥

त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा।
निरूहयेत्तुरङ्गन्तु त्रिकलिङ्गिकमञ्जया ॥ ३४ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
लङ्गिते द्वात्रिंशोऽध्यायः।

---

## अथ त्रयस्त्रिंशोऽध्यायः।

### कर्णरोगनिदानचिकित्सिते।

दोषैः सन्दूषिते रक्ते अथवाप्यभिघाततः।
वाजिनां कर्णरोगस्तु क्लेदशोथान्वितो भवेत् ॥ १ ॥
पूयस्रावेण जानीयात् शोथमभ्यन्तरोद्भवम्।
पिचुना वेष्टयित्वा तु शलाकाग्रं समाहितः ॥ २ ॥
तेन कर्णान्तरे पूयं कर्षयित्वा विचक्षणः।
पातितस्य सुवद्धस्य पूरयेन्मधुसर्पिषा ॥ ३ ॥
कुष्ठं मागधिका लोध्रं मधुकं चन्दनं तथा।
एभिः सिद्धं घृतं दृष्टं कर्णपूरणमुत्तमम् ॥ ४ ॥
पिष्ट्वा कुटजवीजन्तु यष्टीमधुसमन्वितम्।
घृतेनालोड्य मतिमान् कुर्य्याद्वस्त्रपरिस्तुतम् ॥ ५ ॥
पूरयेत्तेन कर्णन्तु सुखोष्णेनैव बुद्धिमान्।
रसेन च कपित्थस्य युक्तेन मधुसर्पिषा ॥ ६ ॥
त्वक्पत्रे चीरवृक्षस्य सर्पनिर्मोकमेव च।
गोलोम गुग्गुलुं कुष्ठं मेषोर्णां च मनःशिलाम् ॥ ७ ॥
घृतेन मर्दयित्वा तु धूपं कर्णे प्रदापयेत्।
भोजयेत् पिप्पलीयुक्तान् मुद्गांश्च क्षौद्रयोजितान् ॥ ८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे कर्णरोगे
त्रयस्त्रिंशोऽध्यायः।

---

# अथ चतुस्त्रिंशोऽध्यायः।

## कासरोगनिदानलक्षणानि।

त्रयो वातादिभिर्दोषैः सन्निपातेन चापरः।
क्षतक्षयसमुत्थौ द्वावेवं कासस्तु षड्विधः॥ १॥
रूक्षो यस्य भवेत् कासः श्लेष्मस्रावविवर्जितः।
क्षीणस्य वर्द्धते चापि वातिकं तस्य निर्दिशेत्॥ २॥
दाहस्वेदयुतः कासो नीलपीतकफान्वितः।
विच्छिन्नस्य तुरङ्गाणां विज्ञेयः पित्तसम्भवः॥ ३॥
अधिकं कासते यस्तु हृष्टरोमाः सुदुर्मनाः।
गुरुगात्रशिरा वाजी मन्दग्रासविचेष्टितः॥ ४॥
दधिकुन्देन्दुसङ्काशं श्लेष्माणं यो विमुञ्चति।
ग्रासाभावे सुखी यश्च तस्य विद्यात् कफात्मकम्॥ ५॥
सर्वेषां लक्षणैर्युक्तं जानीयात् सान्निपातिकम्।
कषायेण च रक्तेन श्लेष्मा क्षतजसम्भवः॥ ६॥
प्रसारयति यो गात्रं ग्रीवाञ्चापि विशेषतः।
कासमानो हयो दीर्घं भिन्नरोमातिदुर्बलः॥ ७॥
दुर्गन्धिपूयसङ्काशं यश्चैव कफमुद्गिरेत्।
तस्य विद्याद् बुधः कासं हयस्य क्षतसम्भवम्॥ ८॥

## वातकासचिकित्सा।

वातकासाभिभूतस्य पानं दद्याद्विचक्षणः।
पञ्चमूलकषायेण कृत्वा मांसरसं बुधः॥ ९॥
गोक्षीरं शर्करायुक्तं पिप्पली नागरान्वितम्।
तिलतैलेन संयोज्य भोजयेल्लवणान्वितम्॥ १०॥
दुरालभां कण्टकारीं बृहतीं कटुरोहिणीम्।
पिष्ट्वा वार्त्ताकुयूषेण तैलसिक्तेन पण्डितः॥ ११॥

वंशरोचनयायुक्तं चूर्णं गोधूमजं ततः।
तेन कल्केन संनीय क्षीरेण विधिवत्पचेत् ॥ १२ ॥
ततो गुड़ेन संयोज्य भोजयेत् सर्पिषा सह।
घृतेन मधुना युक्तं पायसञ्च प्रदापयेत् ॥ १३ ॥
वार्त्ताकानां फलैः क्वाथः शुण्ठीमागधिकान्वितः।
मूर्च्छितस्तिलतैलेन पाने दत्तः सुखावहः ॥ १४ ॥
मूलकस्य रसञ्चैव वार्त्ताकक्वाथवद्भिषक्।
वातिके दापयेत्पानं कासे तैलेन मिश्रितम् ॥ १५ ॥
कुलत्थदर्भमूलन्तु घृतगोमेदसा युतम्।
धूपोऽनेन प्रदातव्यो नासिकाविवरेण तु ॥ १६ ॥

पित्तकासचिकित्सा।

गृहीत्वा गोमयरसं पिप्पलीचूर्णसंयुतम्।
मधुना सर्पिषा चैव लेहं कासे सपैत्तिके ॥ १७ ॥
पायसं यवचूर्णेन छागक्षीरेण साधितम्।
धात्रीमागधिकाचूर्णं भोजयेन्मधुसर्पिषा ॥ १८ ॥
पिप्पली मधुकाभ्यान्तु बला रोचनया युतम्।
पिप्पलीचूर्णसंयुक्तं छागक्षीरं सशर्करम् ॥ १९ ॥
एतत्पानं प्रदातव्यं वातकासप्रशान्तये।
पटोलपत्रनिःक्वाथे सुस्विन्नान् भोजयेत्ततः ॥ २० ॥
मुद्गान् मागधिकायुक्तान् मधुयुक्तेन सर्पिषा।
चूर्णमामलकानान्तु वंशरोचनया युतम् ॥ २१ ॥
पिप्पलीचूर्णसंयुक्तं सर्पिषा सह साधयेत्।
तं लेहं दापयेद्दाहे पिण्डं वा भोजयेत्ततः ॥ २२ ॥
फलचूर्णञ्च काश्मर्य्या एवं दद्याद्विचक्षणः।
लोध्रचन्दनयष्ट्याह्वपद्मकैर्घृतयोजितैः।
धूपो नासाग्रतः कार्य्यः शास्त्रदृष्टेन कर्मणा ॥ २३ ॥

श्लेष्मकासचिकित्सा ।

चित्रकं त्रिफलाचूर्णं मुस्तकं कटुकत्रयम् ।
मधुना दापयेल्लेहं श्लेष्मकासार्दिते हये ॥ २४ ॥
पञ्चतिक्तसुसंसिद्धं तिक्तमुद्गञ्च भोजयेत् ।
मधुना तिलतैलेन युक्तास्त्रिकटुकेन च ॥ २५ ॥
गवां मूत्रेण सुस्विन्नास्तिलतैलेन मर्दिताः ।
व्योषचूर्णसमायुक्ताः कुलत्था भोजने हिताः ॥ २६ ॥
दन्तीमूलं हरिद्रा च हिङ्गु च वृहतीफलम् ।
एतैस्तु धूपयेत्कासे नासिकायां कफात्मके ॥ २७ ॥
क्षतजे क्षयकासे च पित्तकासोदितां क्रियाम् ।
कुर्य्यान्मतिमतां श्रेष्ठो वाजिनां हितकाम्यया ॥ २८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे कासरोग-
चिकित्सिते चतुस्त्रिंशोऽध्यायः ।

---

## अथ पञ्चत्रिंशोऽध्यायः ।

### हिक्काश्वासनिदानलक्षणम् ।

मुखेन नासया चैव यः श्लेष्माणं विमुञ्चति ।
वातिकं शिशिरे काले तस्य श्वासं विनिर्दिशेत् ॥ १ ॥
शरन्निदाघयोश्चैव श्वासः पित्तेन जायते ।
तृष्णादाहपरीतस्य खिन्नगात्रस्य वाजिनः ॥ २ ॥
मुखेन नासया चैव कफो यस्य प्रवर्त्तते ।
प्रावृट्काले वसन्ते वा श्वासस्तस्य कफात्मकः ॥ ३ ॥
दृष्ट्वा लक्षणसाङ्कर्य्यमादिशेत् सन्निपातजम् ।
द्वन्द्वजश्च तथा द्वाभ्यां दोषाभ्यां जनितं बुधः ॥ ४ ॥

श्वासचिकित्सा।

पञ्चमूलकषायेण कृत्वा मांसरसं भिषक्।
वातश्वासे प्रदातव्यं शाल्यन्नेन च भोजनम् ॥ ५ ॥
निस्तुषा जलकुम्भस्थाः खादने विहिता यवाः।
पित्तश्वासार्दिते दाहे पानलेपौ च शीतलौ ॥ ६ ॥
इक्षोः शरस्य काशस्य नलवेतसयोस्तथा।
मूलक्वाथः प्रदातव्यः पाने क्षौद्रसितान्वितः ॥ ७ ॥
वस्तिश्चैव जलक्षीरैः पित्तश्वासे प्रकीर्त्तितः।
मुहुर्मुहुश्च पङ्केन प्रलेपश्च हितस्तथा ॥ ८ ॥
रास्ना गोक्षीरपानञ्च शर्करा मधुमूर्च्छितम्।
पञ्चतिक्तेन सिद्धस्य अक्षपानञ्च सर्पिषा ॥ ९ ॥
उशीरं पद्मकं मूर्वाकाश्मर्य्याश्च फलं सितम्।
शीतेन वारिणा दद्यात् पानं क्षौद्रेण योजितम् ॥ १० ॥
पक्षनाड़ीं मयूरस्य जङ्घां वा चर्म वा भिषक्।
दग्ध्वा लेहं प्रकुर्वीत घृतेन मधुना सह ॥ ११ ॥
मयूरनाड़ीकल्केन शलाकां शल्लकस्य च।
दद्याद्दश्चीनि वा प्राज्ञः पित्तश्वासोपशान्तये ॥ १२ ॥
वार्त्ताकयूषः पानाय तिलतैलेन योजितः।
श्वासे कफात्मके देयस्तिक्तमुद्गांश्च भोजयेत् ॥ १३ ॥
द्वन्द्वजे द्विविधो देयः सङ्कीर्णः सान्निपातिके।
श्वासोक्ता याः क्रियाः सर्वा लेहपानादिपूर्विकाः।
प्रयोक्तव्यास्तु हिक्कायां वाजिनां हितमिच्छता ॥ १४ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
हिक्काश्वासे पञ्चत्रिंशोऽध्यायः।

---

# अथ षट्‌त्रिंशोऽध्यायः।

## व्रणनिदानलक्षणानि।

आगन्तुकं दोषजञ्च व्रणं द्विविधमुच्यते।
लक्षणञ्च चिकित्साञ्च तस्य वक्ष्यामि शास्त्रतः ॥ १ ॥
दोषजं शोथपाकोत्थं व्रणं विद्याद्विचक्षणः।
शस्त्रघातादिजञ्चैव ज्ञेयमागन्तुकं तथा ॥ २ ॥
चिरपाकं चिरस्पर्शं ज्ञेयं वातात्मकं बुधैः।
पित्तजं शीघ्रपाकञ्च कण्डूदाहसमन्वितम् ॥ ३ ॥
घनञ्चोत्सेधसंयुक्तं श्लैष्मिकं मन्दवेदनम्।
व्रणं चिरविपाकञ्च श्वेतवर्णं समादिशेत् ॥ ४ ॥
सर्वरूपैस्तु संयुक्तं विज्ञेयं सन्निपातजम्।
द्विरूपं द्वन्द्वजञ्चापि कीर्त्तितं मुनिसत्तमैः ॥ ५ ॥
दुष्टं संशोधयेत्प्राज्ञः शुद्धञ्चापि प्ररोहयेत्।
आनुपूर्व्या यथायोगं व्रणं शास्त्रविशारदः ॥ ६ ॥
उत्सन्नञ्चैव दुर्गन्धि स्फुटितं पिड़कान्वितम्।
अशुद्धं निर्द्दिशेद्वैद्यो व्रणं शुद्धं विपर्य्यये ॥ ७ ॥

## व्रणचिकित्सा।

दन्तीमूलं हरिद्रे द्वे चित्रकं विश्वभेषजम्।
रसोनं सैन्धवञ्चापि तक्रकाञ्जिकयोजितम् ॥ ८ ॥
दुष्टव्रणानां सर्व्वेषां शोधनाय प्रकीर्त्तितम्।
तिलशक्तुकपिण्डञ्च दधियुक्तञ्च सैन्धवम् ॥ ९ ॥
निम्बपत्रयुतं पिण्डं तिलकल्कस्य बुद्धिमान्।
मधुसैन्धवसंयुक्तं दद्याद् व्रणविशुद्धये ॥ १० ॥
मधुसैन्धवहीनोऽयं पिण्डो निम्बतिलोद्भवः।
प्रवरो रोपणीयानां व्रणे शुद्धिसमन्विते ॥ ११ ॥

दाड़िमामलकागस्तिकपित्थानां विचक्षणः।
त्वक्चूर्णं दापयेत् शुद्धे व्रणे चोत्तानके भिषक्॥ १२॥
व्रणे रूढ़े प्रदातव्यं रोमसंजननं परम्।
चूर्णं मुनिमुखोद्गीर्णं वक्ष्यमाणमिदं ततः॥ १३॥
खुरचर्मास्थिबालञ्च दन्तशृङ्गनखं तथा।
गवादीनां यथालाभं कटाहं कच्छपस्य च॥ १४॥
गृहीत्वा कारयेद्भस्म अन्तर्दग्धं विचक्षणः।
तद्दद्याद् घृततैलाभ्यां रोम्णां संजननं परम्॥ १५॥
अश्वमारकदन्त्यर्कस्नुहीहाटकचित्रकैः।
पचेत्तैलं सभल्लातं नाड़ीव्रणहरं परम्॥ १६॥
आगारधूमं संपिष्य गोमूत्रेण विचक्षणः।
नाड़ीं प्रपूरयेद् युक्त्या तदुपद्रवशान्तये॥ १७॥
नाड़ीव्रणो यदा शुद्धिं भेषजेन न गच्छति।
तदा वह्निः प्रदातव्यस्तथाच पित्तजे व्रणे॥ १८॥
सरक्ते तत्क्षणोद्भूते व्रणे आगन्तुके भिषक्।
मूलकादिभिरम्लस्थैः कुर्य्यात् स्वेदं विचक्षणः॥ १९॥
ततो मधुककल्कन्तु दद्यात् क्षौद्रघृतान्वितम्।
बध्नीयाद्वस्त्रपट्टेन मुहुः सिञ्चेच्च सर्पिषा॥ २०॥
पञ्चवल्कलकल्केन सघृतेन प्रलेपयेत्।
शुष्कग्रासं भिषग्दत्त्वा पाने स्तोकं जलं तथा॥ २१॥
पूयभावे गते तस्मिन् पूर्वोक्ताः शोधनादिकाः।
दोषजोक्ताः क्रियाः सर्वाः कर्त्तव्याः सावसानिकाः॥ २२॥
अवगाढ़ं चिरोद्भूतं मांसमज्जास्थिसंस्थितम्।
कृच्छ्रसाध्यमसाध्यं वा व्रणं विद्यात् समाहितः॥ २३॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे
व्रणरोगे षट्त्रिंशोऽध्यायः।

## अथ सप्तत्रिंशोऽध्यायः ।

### वातादिसिङ्घानलक्षणानि ।

वातिके पैत्तिके चैव श्लैष्मिके सान्निपातिके ।
सिङ्घानके प्रवक्ष्यामि लक्षणं भेषजं तथा ॥ १ ॥
तनुस्रावं सफेनञ्च वातिकं तत् प्रकीर्त्तितम् ।
रक्तपीतासितैः स्रावैर्विन्द्यात् पित्तसमुद्भवम् ॥ २ ॥
घनेन दधिवर्णेन कफजञ्चैव निर्द्दिशेत् ।
नानावर्णेन जानीयादसाध्यं सान्निपातिकम् ॥ ३ ॥

### तच्चिकित्सा ।

शिरसः स्वेदनं कुर्य्याद् वातिके श्लेष्मिके तथा ।
प्रियङ्गुचन्दनोशीरैः शिरोलेपस्तु पित्तजे ॥ ४ ॥
सिंघानकेषु सर्वेषु शङ्खयोस्तालुके तथा ।
शिरावेधं प्रशंसन्ति मुनयः शास्त्रकोविदाः ॥ ५ ॥
गोमूत्रेण च संपिष्य बृहती गौरसर्षपान् ।
तिक्तवार्त्ताकवीजानि तैलेनालोड्य दापयेत् ॥ ६ ॥
नस्यं सिंघानके प्राज्ञो वातिके श्लेष्मिके तथा ।
घासार्थं विहिता दूर्वा पाने चाल्पजलं तथा ॥ ७ ॥
नाड़िकाग्रे व्योषचूर्णं दद्यात् नासापुटान्तरे ।
पश्चिमे नाड़िकाच्छिद्रे मुखवातं प्रपूरयेत् ॥ ८ ॥
एष प्रधमनो नाम विधिः श्लेष्मापकर्षणः ।
सिंघानके प्रयोक्तव्यं शिरसश्च विरेचनम् ॥ ९ ॥
व्योषचूर्णं विधानेन अन्यैर्वा कटुचूर्णकैः ।
दापयेत् श्लेष्मशमनं नस्यं तैलञ्च साधितम् ॥ १० ॥

पुनर्नवा विडङ्गञ्च सरलं देवदारु च।
रजनी चैव वाराही बलामूलं तथैव च॥ ११॥
एतानि समभागानि कल्कं कृत्वा विचक्षणः।
पञ्चमूलकषायेण पाचयेत्तैलमुत्तमम्॥ १२॥
तेन नस्यं प्रदातव्यं वातश्लेष्मसमुद्भवम्।
सिङ्घानके तुरङ्गाणां कटुचूर्णविचूर्णितम्॥ १३॥

मञ्जिष्ठा मधुकं लोध्रं पिप्पली रजनीद्वयम्।
नस्यं क्षीरेण दातव्यं पित्तसिङ्घानकापहम्॥ १४॥
लोध्रं प्रपौण्डरीकञ्च मधुकञ्चोत्पलं तथा।
कल्कं कृत्वा पचेत्तैलं पयसा वारिणा सह॥ १५॥
पित्तसिङ्घानकार्त्तस्य तैलेनानेन बुद्धिमान्।
नस्यं दद्याद् यथायोगं तेन सम्पद्यते सुखम्॥ १६॥
दत्तनस्यं ततो वाहं बद्धा जङ्घाद्वयेऽग्रिमे।
पृष्ठे च ताड़यित्वा तु भ्रामयेत् प्रोथयेत्ततः॥ १७॥
एवं श्लेष्मा विनिर्याति तस्य नासान्तरोद्भवः।
प्रतिप्रभातं कुर्वीत क्रियामेतां समाहितः॥ १८॥
तारयेद्वा जलं निम्नं प्रोथयेद्वा विचक्षणः।
नासाच्छिद्रे विनिःक्षिप्य सूक्ष्मैलां चूर्णितां मनाक्॥
गुड़ूच्यास्त्रिफलायाश्च निम्बवासकयोस्तथा।
क्वाथे मुद्गान् समुत्स्विद्य सुखोष्णान् स्नापयेत्ततः॥ २
पञ्चमूलकषायेण रसैर्मांसस्य साधितैः।
मर्दयित्वा ततस्तैलं दत्त्वा मधु च भोजयेत्॥ २१॥
श्लेष्मजे वातजे चैव कटुचूर्णं प्रदापयेत्।
तिक्तमुद्गा घृताभ्यक्ताः पित्तसिङ्घानके हिताः॥ २२॥

न दद्यात् पित्तजे तैलं केवलं विहितं घृतम् ।
द्वन्द्वजे च भिषग्विद्वान् कुर्य्यात् साधारणीं क्रियाम् ॥ २३

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे सिद्धान-
चिकित्सिते सप्तत्रिंशोऽध्यायः ।

---

## अथ अष्टत्रिंशोऽध्यायः ।

### घृणिरोगचिकित्सा ।

नासिकाभ्यन्तरे यस्य पिड़कानां समुद्भवः ।
व्रणं वा यदि वा शोथः तस्य विद्याद् घृणी रुजम् ॥ १ ॥
प्रोथजां वेधयेत्तस्य शिरां शोथे विचक्षणः ।
अथवा शोणितं दुष्टं कर्षयेच्च जलौकसा ॥ २ ॥
धरण्यां पातयित्वा तु दृढ़ं बद्धा तुरङ्गमम् ।
नासापुटं ततः शस्त्रैः पाटयित्वा विचक्षणः ॥ ३ ॥
उत्कृत्य पिड़काग्रन्थिं दहेल्लोहशलाकया ।
उत्थिते तु ततो वाहे घृताभ्यङ्गः प्रशस्यते ॥ ४ ॥
शीतेनाश्वशीतयेद्वैद्यः पञ्चवल्कलवारिणा ।
मुहुर्मुहुर्व्रणं प्राज्ञो घृतयुक्तेन वाजिनः ॥ ५ ॥
गुग्गुलं पाययेत्तञ्च त्रिफलाक्वाथयोजितम् ।
दूर्वाञ्च यवसं दद्यात्तप्तशीतं जलं तथा ॥ ६ ॥
निम्बपत्रं जलोत्स्विन्नं भोजयेन्मधुसर्पिषा ।
अन्यैर्वा तिक्तकैः सिद्धान् मुद्गान् हरितपीतकान् ॥ ७ ॥
लोहितं चन्दनं लोध्रं मधुकं हरितालकम् ।
कालेयं लवणं लाक्षामजाक्षीरेण साधयेत् ॥ ८ ॥

कल्केनानेन सिद्धञ्च तिलतैलेन मिश्रितम् ।
नस्यार्थञ्च कृतं तैलं घ्राणरोगेषु चोत्तमम् ॥ ९ ॥
नावनं कृतमश्वानां नासाव्रणविशोधनम् ॥ १० ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे घ्राणरोग-
चिकित्सिते अष्टत्रिंशोऽध्यायः ।

---

## अथ एकोनचत्वारिंशोऽध्यायः ।

### पादरोगसंख्या ।

अत ऊर्द्ध्वं प्रवक्ष्यामि पादरोगविनिश्चयम् ।
लक्षणञ्च चिकित्साञ्च यथाशास्त्रानुसारतः ॥ १ ॥
मण्डूकतापः पांशुखुरस्तथा चैव पुनः खुरः ।
आस्रावी चूर्णिकोऽध्यस्थि ऊर्मिकश्चक्रवालिकः ॥ २ ॥
उलूकपादः संस्थानः तदा पादविरालिका ।
आमण्डक उपजङ्घी च दर्भकश्च प्रशोटकः ॥ ३ ॥
कदम्बको घृष्टतलस्तथा भिन्नखुरोऽपरः ।
मृदुमांसखुरौ द्वौ तु पिच्छपादसकेशिनौ ॥ ४ ॥
एते पादगता रोगास्तुरङ्गाणां प्रकीर्त्तिताः ।
एषां चिकित्सां वक्ष्यामि शालिहोत्रादिसम्मताम् ॥ ५ ॥
मण्डूकतापो मण्डूक्यां व्रणेनाश्वस्य जायते ।
अभिघातसमुत्थेन दुष्टकर्दमकेन च ॥ ६ ॥
पांशुभिः शर्कराभिश्च पूर्य्यते यस्य कोटरम् ।
तले तस्य विजानीयाद्रोगं पांशुखुरं भिषक् ॥ ७ ॥
घृष्टं भूमौ तलं यस्य ताम्रौ भवति वाजिनः ।
तस्य घृष्टतलो नाम पादरोगः प्रकीर्त्तितः ॥ ८ ॥

आस्राविणं विजानीयात् क्लेदस्रवतलं हयम् ।
सूक्ष्मचूर्णतलश्चैव चूर्णकील: प्रकीर्त्तित: ॥ ९ ॥
केशाकाराणि मांसानि यस्य स्युस्तलजानि च ।
मांसकेशीति तं विद्यात्तलं वाहस्य बुद्धिमान् ॥ १० ॥
मण्डूक्या विवरं यस्य दर्भमुञ्जकरं भवेत् ।
तस्य दर्भक इत्युक्तो व्याधि: कष्टचिकित्सित: ॥ ११ ॥
पार्ष्णिजा: पिण्डिका यस्य दृश्यन्ते तीव्रवेदना: ।
तस्य विन्द्याद्भिषग्व्याधिं घोरं पादविरालिकम् ॥ १२ ॥
प्रसरन्ति खुरा यस्य अथवा पादुकोपमा: ।
पुन:खुरीति तं विद्यादश्वं विह्वलगामिनम् ॥ १३ ॥
ऊर्मिकश्चोर्मिसंस्थानैर्बलिभि: खुरसम्भवै: ।
विन्द्याद्भिन्नखुरं चैव यस्यान्यो जायते खुर: ॥ १४ ॥
बहुमांसखुरश्चैव ज्ञेयो मांसखुरो हय: ।
मृदुखुरश्च विख्यातो मृदुर्यस्य खुरो भवेत् ॥ १५ ॥
क्लिद्यन्ते वलयो यस्य खुरसन्धिसमुद्भवा: ।
अक्लिन्ना वाथ सरुजस्तं विन्द्याच्चक्रवालिकम् ॥ १६ ॥
कूर्चमावृत्य य: शोथो जङ्घायामुपजायते ।
उलूकपादो विज्ञेयो न च शक्यश्चिकित्सितुम् ॥ १७ ॥
रोमान्त: श्रूयते यस्य समन्तान्नैव पच्यते ।
क्लेदश्च पिच्छिलो यस्य पिच्छपादीति तं विदु: ॥ १८ ॥
प्रावृट्काले व्रणं यस्य जङ्घायामुपजायते ।
स्थाणुरोग: स विज्ञेयो दुष्टशोणितसम्भव: ॥ १९ ॥
ऊर्द्ध्वभागे च कूर्चस्य मृद्वी या गुटिका भवेत् ।
आमण्डकाभिधो नाम्ना जङ्घापार्श्वसमुद्भव: ॥ २० ॥
प्रपोटकं विजानीयाद् ग्रन्थिभि: कूर्चसम्भवै: ।
आमलक्यस्थिसङ्काशै: ग्रन्थिभिश्चातिकण्टकै: ॥ २१ ॥

कदम्बफलमात्रस्तु मण्डूकीमध्यसंस्थितः।
मांसाङ्कुरः कदम्बाख्यः श्लेष्मशोणितसम्भवः॥ २२॥

अथ चिकित्सा।

सर्व्वेषां पादरोगाणां शिरावेधः प्रशस्यते।
तलजायाश्च रोमान्त्याः कूर्च्चजायास्तथैव च॥ २३॥
अभिघातात् खुरतले व्रणं यस्योपजायते।
दुष्टकर्दमसङ्गाद्वा तस्य कुर्य्यात् प्रतिक्रियाम्॥ २४॥
छच्छादनकपात्रेण मण्डूक्यां तस्य शोधयेत्।
अतितीक्ष्णेन शस्त्रेण छिन्नमांसञ्च कर्त्तयेत्॥ २५॥
तलजाञ्च शिरां विद्ध्वा रोमान्ताञ्च विचक्षणः।
मोचयेच्छोणितं दुष्टं कषायैश्चोपनाहयेत्॥ २६॥
गुग्गुलुं पाययेदश्वं त्रिफलाक्वाथयोजितम्।
एवं यदि न सिध्येत तदा वह्निं प्रदापयेत्॥ २७॥
दग्ध्वा तमेव पानाय गुग्गुलूं पाययेद्भिषक्।
सप्ताहं षोड़शाहं वा द्वादशाहमथापि वा॥ २८॥
खादनं नैव दातव्यं दूर्व्वा च यवसे हिता।
शृतशीतञ्च पानाय उदकं तस्य कीर्त्तितम्॥ २९॥
तत्र रोगेषु सर्व्वेषु अयमेव क्रियाक्रमः।
कर्त्तव्यः सर्व्वदा वैद्यैः शास्त्रमार्गानुसारिभिः॥ ३०॥
छिन्द्याद्व्रणं ग्रन्थिपुरं रोमान्तादिव्यवस्थितम्।
प्रयच्छेदविशुद्धन्तु औषधैर्व्वा विदारयेत्॥ ३१॥
स्नुह्यर्ककरवीराणां चित्रकस्य तथैव च।
मूलान्युद्धृत्य सर्व्वेषां गवां मूत्रेण पेषयेत्॥ ३२॥
एतेन लेपयेदुष्णं व्रणं वाहस्य बुद्धिमान्।
परिशुद्धन्तु विज्ञाय रोपणीयैरुपक्रमेत्॥ ३३॥
दन्तीचित्रकमूलन्तु स्नुह्यर्कपयसा सह।

भल्लातकास्थिकाशोषं लेपञ्छिद्यच्छिलामपि ॥ ३४ ॥
एवं यदि सुखी न स्यादग्निकर्म ततःपरम्।
दग्ध्वा तं पूर्ववद्दाहं गुग्गुलुं पाययेद्भिषक् ॥ ३५ ॥
त्रिफलाक्काथयुक्तस्तु सर्वेषां पादरोगिणाम्।
प्रधानो गुग्गुलुर्दृष्टस्तथा दाहश्च वाजिनाम् ॥ ३६ ॥
आमर्दकं पाटयित्वा दग्ध्वा तत्क्षणमेव च।
गुग्गुलुं पाययेत्तावद् यावद्रूढं व्रणं भवेत् ॥ ३७ ॥
माषपर्णीयवांश्चैव न दद्यात्तस्य वत्सरम्।
खादनाय समुद्दिष्टा शुष्का दूर्वा मनीषिभिः ॥ ३८ ॥
आमर्दकविधिः सर्वः कर्त्तव्यः पाटनं विना।
प्रपोटकेऽपि वाहस्य छित्वा चैव कदम्बकैः ॥ ३९ ॥
शिलासदृशकाठिन्यः शोथो जङ्घव्यवस्थितः।
अध्यस्थिसञ्ज्ञितं विन्द्यान्मृदुश्चैवोपजङ्घिकम् ॥ ४० ॥
अग्निं दत्त्वा ततो वैद्यः कुर्य्यादामर्दकक्रियाम्।
शिरावेधो विशेषेण उपजङ्घेषु कीर्त्तितः ॥ ४१ ॥
एतेन यदि चारेण क्रियमाणो न शाम्यति।
पादरोगे तदा वैद्यः कुर्य्यात् कर्म पुनः पुनः ॥ ४२ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे पादरोगे एकोनचत्वारिंशोऽध्यायः।

---

## अथ चत्वारिंशोऽध्यायः।

### वातज्वरनिदानलक्षणानि।

कारणैः पूर्वमुद्दिष्टैः कुपिते मातरिश्वनि।
ज्वरो वातात्मिकोऽश्वस्य तदा भवति दुःसहः ॥ १ ॥
गुरुत्वञ्चोष्णता चैव मस्तकस्योपजायते।

शीतता पर्व्वसन्धीनां चलनश्चैव शङ्खयोः ॥ २ ॥
स्तब्धाङ्गस्य तुरङ्गस्य ग्रासद्वेषेण बुद्धिमान्।
वातज्वरं विदित्वा तु ततः कुर्य्यात् प्रतिक्रियाम् ॥ ३ ॥

चिकित्सा।

विद्रतेन प्रसारिण्या अन्यैर्वातविनाशनैः।
तैलैरभ्यङ्गिभाङ्गस्य कर्त्तव्ये स्वेदमर्द्दने ॥ ४ ॥
लङ्घनं कारयेत्तावद् यावन्मुक्तज्वरो भवेत्।
अप्राप्तौ विद्रतादीनां तैलयुक्तेन सर्पिषा ॥ ५ ॥
वसायुक्तेन चाभ्यङ्गं तिलतैलेन कारयेत्।
कषायः पञ्चमूलस्य सुरा गोमूत्रसंयुतः ॥ ६ ॥
निरूहः पिप्पलीकल्कयुक्तोऽतीव प्रशस्यते।
तैलैर्वातहरैः सम्यक् हितं तस्यानुवासनम् ॥ ७ ॥

पित्तज्वरचिकित्सा।

भोजनं विहितं तस्य स्निग्धैर्मांसरसौदनैः।
निदानैः पित्तजननैः सेवितैः पित्तजो ज्वरः ॥ ८ ॥
स्वेददाहौ वपुःशोषो रक्तनेत्रश्च जायते ॥ ९ ॥
बदरीपत्रफेनेन तस्य गात्रं प्रलेपयेत्।
वीजयेत्तोयसिक्तैश्च तालवृन्तैर्भिषग्वरः ॥ १० ॥
अवगाहे जले चैव स्नापयित्वा च तं हयम्।
मस्तके दापयेत् प्राज्ञः शीतं धारजलं तथा ॥ ११ ॥
तस्याङ्गं सेचयेद्दध्ना काञ्जिकेन च बुद्धिमान्।
क्षीरपानञ्च दातव्यं शर्करेक्षुसमन्वितम् ॥ १२ ॥
मकाशदूर्वेक्षुकुशैः क्षीरपिष्टैः सितोत्पलैः।
घृतयुक्तः प्रलेपश्च तस्य गात्रे प्रशस्यते ॥ १३ ॥
कुशकाशेक्षुमुस्तानां कल्कयुक्तः सपद्मकैः।
क्षीरवस्तिः स्मृतस्तस्य मञ्जिष्ठा शर्करान्वितः ॥ १४ ॥

सर्पिषा सहितं तस्मै यवान्नं भोजने हितम् ।
शीतलञ्च जलं पाने ग्रासे दूर्वा च शस्यते ॥ १५ ॥
पित्तज्वरसमाकारौ रोगशेषौ निरामकौ ।
रोगे पित्तज्वरे प्रोक्ता तयोस्तां कारयेत् क्रियाम् ॥ १६ ॥
क्रोधादिभिः श्रमाच्चैव कट्वम्ललवणाशनात् ।
अनयोः सम्भवः प्रोक्तो ग्रीष्मवातोपसेवनात् ॥ १७ ॥

श्लेष्मज्वरनिदानम् ।

हेतुभिः श्लेष्मजननैः सेवितैः श्लेष्मसम्भवः ।
तेन तन्द्रा भवत्यस्य अरुचिर्गात्रसादनम् ॥ १८ ॥
उष्णाभिलाषो वाहानां नासास्रावश्च जायते ॥ १९ ॥

तच्चिकित्सा ।

मरिचञ्चैव पाठाञ्च मुस्तकं कटुरोहिणीम् ।
पिप्पलीं चैव शुण्ठीं च गुडूचीं चव्यकं वचाम् ॥ २० ॥
वारिणा क्वाथयित्वा तु पादशेषं समाहरेत् ।
कषाय एष दातव्यः पाने क्षौद्रेण योजितः ॥ २१ ॥
पञ्चतिक्तकसिद्धांश्च मुद्गांस्त्रिकटुकान्वितान् ।
भोजयेन्मधुसंयुक्तान् सुखोष्णांश्चैव बुद्धिमान् ॥ २२ ॥
वालुकापुटकैः स्वेदो गात्रे मूर्ध्नि च दापयेत् ।
शङ्खजाञ्च शिरां तस्य मन्याजाञ्चैव वेधयेत् ॥ २३ ॥

सन्निपातज्वरलक्षणचिकित्साः ।

सर्वेषां चैव रूपाणि कुरुते सान्निपातिकः ।
असाध्यः स तु विख्यातस्तस्य साधारणी क्रिया ॥ २४ ॥

अभिघातज्वरलक्षणचिकित्सा ।

कासः स्तम्भश्च मूर्च्छा च सशोणितकफोद्गमः ।
अभिघातसमुत्थे तु ज्वरे जृम्भा च जायते ॥ २५ ॥
पञ्चवल्कलकल्केन घृतयुक्तेन वाजिनः ।

लेपयेत्तस्य गात्राणि सशिरस्कानि बुद्धिमान्॥ २६॥
चन्दनोशीरमञ्जिष्ठावलामधुकपद्मकैः।
पयसा साधितं सर्पिस्तस्य पाने प्रशस्यते॥ २७॥
अनुवासनं निरूहञ्च भोजनञ्चैव पण्डितः।
पित्तज्वरसमुद्दिष्टं कुर्य्याद् बुद्धिमतांवरः॥ २८॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे ज्वररोगे चत्वारिंशोऽध्यायः।

---

## अथ एकचत्वारिंशोऽध्यायः।

### अजीर्णलक्षणम्।

अजीर्णेन भवेद्वाजी मन्दग्रासश्च दुर्मनाः।
स्वञ्जपाणिश्च जङ्घाभ्यां कृच्छ्रमूत्रपुरीषकृत्॥ १॥
यदि शोथो न जङ्घाभ्यामातुरस्य न वा व्रणम्।
अभिघातश्च नो कश्चित् तदाजीर्णेन खञ्जति॥ २॥

### तच्चिकित्सा।

उपवासो हितस्तस्मै तावद्यावत्तु लङ्घति।
अतिलङ्घं त्र्यहादूर्द्धमस्तब्धमपि वारयेत्॥ ३॥
कृतोपवासे वाहे तु यथा तु प्रतिपानकैः।
प्रतिपानं वारणीयं त्र्यहं पञ्चाहमेव च॥ ४॥
अशुद्धे चारिते वाहे तथा जातबले भिषक्।
सप्तरात्रात्परं विद्वान् शिरावेधं प्रयोजयेत्॥ ५॥
उरसा खञ्जतोऽश्वस्य औरसीं वेधयेत् शिराम्।
जङ्घायां जाङ्घिकीञ्चैव कूर्चजाः कूर्चलङ्घिते॥ ६॥
पिण्डं हृष्टतुरङ्गस्य सायं मध्ये न दापयेत्।

कटुका पिप्पली शुण्ठी वचारामठसैन्धवैः ॥ ७ ॥
अशुद्धे गुग्गुलुर्देयः पूर्वोक्तेनैव कर्मणा ॥ ८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रेऽजीर्णचिकित्सिते एकचत्वारिंशोऽध्यायः ।

---

## अथ द्विचत्वारिंशोऽध्यायः ।

### वाताद्यतीसारलक्षणचिकित्सितम् ।

अनिलेनाथ पित्तेन श्लेष्मणा चापि वाजिनः ।
अतीसारस्तथाचान्यः सन्निपातेन जायते ॥ १ ॥
सङ्कोचिताङ्गः स्वानेन सकफं योऽतिसार्य्यते ।
अल्पं तनु सशब्दञ्च पुरीषं बहु वा हयः ॥ २ ॥
तस्य वातात्मकं विन्द्यादतीसारं विचक्षणः ।
पित्तजञ्चैव वक्ष्यामि श्लेष्मजञ्च समासतः ॥ ३ ॥
खेददाहपरीतानां लक्षयेन्मतिमान् भिषक् ।
स्रावेण नीलरक्तेन विस्रगन्धेन पित्तजम् ॥ ४ ॥
मन्दाहारस्तथा वाहो हृष्टरोमातिपीड़ितः ।
श्यामैः सपिच्छिलैर्भिन्नैर्विद्यात् श्लेष्मसमुद्भवम् ॥ ५ ॥
सन्निपातात्मकञ्चैव सर्वेषां लक्षणैर्युतम् ।
द्विरूपं द्वन्द्वजं ज्ञेयमतीसारं विचक्षणैः ॥ ६ ॥
अतीसाराः समुद्दिष्टाः शालिहोत्रादिभिः पुरा ।
एषां चिकित्सां वक्ष्यामि यथाशास्त्रानुसारतः ॥ ७ ॥
येन शाम्यन्ति वाहानामतीसाराः सुदारुणाः ।
बृहतीं शालिपर्णीञ्च पृश्निपर्णीं निदिग्धिकाम् ॥ ८ ॥
बिल्वं शुण्ठीं कपित्थञ्च क्वाथयेत्सत्रिकण्टकम् ।
एतेन साधयेत् प्राज्ञो यवागूं शालितण्डुलैः ॥ ९ ॥

दध्नाम्लेन तु संयुक्तां दद्यात्तां भोजने भिषक्।
यवागूं साधयेद् यान्तु बृहत्यादिकृदाहृता ॥ १० ॥
क्वाथः पाने प्रदातव्यो वातातीसारशान्तये ॥ ११ ॥

पित्तातिसारचिकित्सा।

जम्ब्वाम्रदाड़िमानान्तु क्वाथयित्वा त्वचं बुधः।
मधुना प्रतिपानाय दद्यात् पित्तातिसारिणे ॥ १२ ॥
चूर्णं वा मधुसंयुक्तं तैलयोगेन दापयेत्।
जम्ब्वादीनां प्रयोगेण पाठा वा कुटजान्विता ॥ १३ ॥
अनेनैव कषायेण साधितां मधुसंयुताम्।
यवागूं भोजयेद्वाहं रक्तशालेस्तु तण्डुलैः ॥ १४ ॥

श्लेष्मातिसारचिकित्सा।

वीजं कुटजवृक्षस्य त्वक्चूर्णं दाड़िमाम्रयोः।
मातुलुङ्गरसोपेतं सैन्धवेनावचूर्णितम् ॥ १५ ॥
लेहयेन्मधुसंयुक्तं श्लेष्मातीसारशान्तये।
एतेषां वा कषायन्तु मधुना प्रतिपाययेत् ॥ १६ ॥
अनेनैव कषायेण साधितं यवतण्डुलैः।
मधुसैन्धवसंयुक्तां यवागूं भोजयेत्ततः ॥ १७ ॥

आमसन्निपातद्वन्द्वजातिसारचिकित्साः।

पिप्पल्या लवणं शुण्ठी मरिचं चित्रकं वचा।
आमातीसारिणे देयं सुरया पानमुत्तमम् ॥ १८ ॥
सन्निपातसमुत्थे तु कार्य्या साधारणी क्रिया।
द्विरूपे द्विविधा चैव चिकित्सा परिकीर्त्तिता ॥ १९ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रेऽतीसार-
चिकित्सिते द्विचत्वारिंशोऽध्यायः।

# अथ त्रिचत्वारिंशोऽध्यायः।

## पञ्चविधशूलनिदानलक्षणानि।

सोभिक्षश्चोर्द्ध्ववर्त्तिश्च भिन्नवर्त्तिस्तथैव च।
विबन्धस्नेहवर्त्तिश्च कुक्षौ शूलस्य पञ्चधा॥ १॥
गुरुभिः खादितैर्नित्यं तथा स्नेहातियोगतः।
सोभिक्षो जायतेऽश्वस्य आमविड्गलक्षितः॥ २॥
यवसं खादनश्चैव यो वाजी खादितं पुनः।
मुखेन प्रोद्गिरत्याशु तं विद्यादूर्द्ध्ववर्त्तिनम्॥ ३॥
अतीसारेण संयुक्तं शूलं यस्योपजायते।
भिन्नवर्त्तीति तं विद्यात्तुरङ्गं दीनचेष्टितम्॥ ४॥
नोत्सृजेद् यः पुरीषं तु सानाहः शूलपीड़ितः।
विबन्धवर्त्तिः सास्याच्चस्तं विद्यात् कष्टजीवितम्॥ ५॥
भिन्नं स्निग्धं पुरीषञ्च जायते यस्य वाजिनः।
स्नेहातियोगात्तस्याशु स्नेहवर्त्तिं समादिशेत्॥ ६॥

## सोभिक्षविबन्धचिकित्सा।

सोभिक्षे च विबन्धे च क्कत्वा स्वेदं विचक्षणः।
वक्ष्यमाणां ततः प्राज्ञः कुर्य्याद्वर्त्तिक्रियामिमाम्॥ ७॥
आगारधूमं सुरसं पिप्पलीं सर्षपं वचाम्।
सिन्धुवारीञ्च शुण्ठीञ्च तथा लवणपञ्चकम्॥ ८॥
सुचूर्ण्यं च ततो वर्त्तिं कुर्य्यात्तप्तगुड़ेन तु।
दैर्घ्यमष्टाङ्गुलं तस्याः स्थौल्यञ्चाङ्गुष्ठसम्मितम्॥ ९॥
प्रक्षिप्रेत्तां गुदेऽश्वस्य व्योषचूर्णावचूर्णितम्।
सैन्धवक्षौद्रलिप्तान्तु मलप्रच्युतिकारिणीम्॥ १०॥
वर्त्त्यापकृतदोषस्य वक्ष्युतैर्भेषजैस्ततः।

सुराकाञ्जिकगोमूत्रैः प्रयुञ्जीतानुवासनम्॥ ११॥
आमं विना यदा शूलो वाताद्भवति दारुणः।
अनुवासने ततस्तैलं दातव्यं पूर्वनोदितम्॥ १२॥
दुर्गन्धं पिच्छिलं भिन्नं पुरीषं श्लेष्मणावृतम्।
आमं भवति वाहस्य पक्वञ्चैव विवर्जयेत्॥ १३॥
आमं नैव प्रशंसन्ति वाजिशास्त्रविशारदाः।
दौर्मनस्यारुचिग्लानिविष्टम्भत्वग्रहकारकम्॥ १४॥
दत्तानुवासने वाहे शुद्धकोष्ठे विचक्षणः।
अपरेऽहनि भुञ्जीत प्रतिपानमिदं ततः॥ १५॥
हरेणुकाञ्च कुष्ठञ्च भार्गीं दन्तीञ्च चित्रकम्।
लवणं व्योषचूर्णञ्च सुरया पाययेद्भिषक्॥ १६॥
घासार्थं दापयेच्चूर्णं पानं कोष्णं जलं तथा।
एवं यदि सुखी न स्याद्वाहः कुक्षौ तदा भवेत्॥ १७॥
सङ्कुलं प्रेक्षते वाजी उत्थानपतनैर्मुहुः।
कुञ्चितेन च गात्रस्य शूलं स्पष्टं करोत्यलम्॥ १८॥
श्यामजिह्वा समाध्मातो ध्यायेन्निश्चलवालधिः।
रक्तमूत्रा ततः शूली न च शक्यश्चिकित्सितुम्॥ १९॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे शूलचिकित्सिते त्रिचत्वारिंशोऽध्यायः।

---

## अथ चतुश्चत्वारिंशोऽध्यायः।

### उदावर्त्तलक्षणचिकित्सितम्।

पुरीषं वर्त्तितं यस्य कृच्छ्रं निर्याति वा पुनः।
वेदनार्त्तस्य वाहस्य तस्योदावर्त्तमादिशेत्॥ १॥

आरग्वधकषायेण मूर्च्छितं घृतयोजितम् ।
यावकं भोजने तस्मै स्नेहवस्तिश्च दापयेत् ॥ २ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे उदावर्त्तचिकित्सिते चतुश्चत्वारिंशोऽध्यायः ।

---

## अथ पञ्चचत्वारिंशोऽध्यायः ।

### प्रस्कन्नरोगलक्षणचिकित्सितम् ।

गुरुर्यस्य भवेद्वक्षः स्तब्धगात्रपरिक्रमः ।
कुब्जीभूतेन पृष्ठेन यो वाजी याति बद्धवत् ॥ १ ॥
प्रस्कन्नरोगसन्तप्तं विद्याद् बुद्ध्या च तं भिषक् ।
चिकित्सां तस्य वक्ष्यामि भाषितां मुनिसत्तमैः ॥ २ ॥
आज्यं त्रिकटुकोपेतं पाययेत्तं विचक्षणः ।
ततः स्निग्धस्य कर्त्तव्यः शिरावेधो यथोदितः ॥ ३ ॥
औरसीं पादिकीं तस्य तलजां कूर्चजामपि ।
पूर्वकाये शिराशस्त्रे भेषजं तद्विचक्षणः ॥ ४ ॥
औपाण्डीं पश्चिमे काये खौरिकीं कूर्चजां तथा ।
विध्यात् शिराशस्त्रमुखे देयं कर्दमलेपनम् ॥ ५ ॥
विद्धं न चारयेद्वाहमेकरात्रं विचक्षणः ।
वक्ष्यमाणं ततः पानमपरेऽह्नि प्रदापयेत् ॥ ६ ॥
त्रिफलाक्काथसंयुक्तस्तथा क्षौद्रसमन्वितः ।
गुग्गुलुः प्रतिपानाय देयः प्रस्कन्ननाशनः ॥ ७ ॥
ग्रासार्थे दापयेद्दूर्वाः पाने चैव मधूदकम् ।
अथवा पिप्पलीतोयं प्रशस्तं तस्य वाजिनः ॥ ८ ॥
पञ्चमूलकषायस्तु तिलतैलेन योजितः ।
हेमन्ते क्षारसंयुक्तो देयः प्रस्कन्नपीड़िते ॥ ९ ॥

यदि सिद्धिर्भवेन्नैव भिषजानामुपक्रमैः।
तयो वह्निः प्रदातव्यो बाह्वोर्वंचसि कूर्चके॥ १०॥
दग्धाग्ने र्गुग्गुलुः शस्तो वाहस्य त्रिफलायुतः।
भ्रामणञ्चैव वाहानां प्रस्कन्नव्याधिशान्तये॥ ११॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे प्रस्कन्नचिकित्सिते पञ्चचत्वारिंशोऽध्यायः।

---

## अथ षट्चत्वारिंशोऽध्यायः।

### क्रमिकोष्ठनिदानचिकित्सितम्।

कृशस्य यस्य वाहस्य जन्तुभिः परिवेष्टितम्।
पुरीषं जायते भिन्नं तं विन्द्यात् क्रमिकोष्ठकम्॥ १॥
श्लेष्मकोष्ठी समुद्दिष्टो मन्दाहारस्तुरङ्गमः।
दुर्बलो भिन्नरोमा च गुरुगात्रस्तथैव च॥ २॥
पुरीषं श्लेष्मणा मिश्रं पिच्छिलं तस्य सर्वदा।
निद्रा च जायतेऽत्यर्थं तन्द्रा चैव समन्विता॥ ३॥
तत्रादौ क्रमिकोष्ठस्य क्रियां वच्यामि तत्त्वतः।
आज्यमस्मै प्रदातव्यं मांसक्षीरेण साधितम्॥ ४॥
षष्टिकान्नं तिलाः क्षीरं गुड़श्च दधिमिश्रितम्।
क्रमिकोष्ठाय दातव्यं भोजनं तावदग्रतः॥ ५॥
विड़ङ्गं चित्रकं पाठा दन्ती च निचुलं तथा।
कम्पिल्लकञ्च तुल्यांशं कषायं कारयेद् बुधः॥ ६॥
कम्पिल्लकस्य कल्केन कषायेणामुनैव तु।
विड़ङ्गचूर्णसंयुक्तं सिद्धं सर्पिः प्रदापयेत्॥ ७॥
घृतं विड़ङ्गसंयुक्तं सिद्धसर्पिः प्रदापयेत्।
दन्तीकषायकल्केन साधितञ्च प्रदापयेत्॥ ८॥

घृतं विड़ङ्गसंयुक्तं दृष्टकर्मा विचक्षणः ।
द्वे हरिद्रे विड़ङ्गानि तथा लवणपञ्चकम् ॥ ९ ॥
पटोलं निम्बपत्रञ्च वचां चित्रकमेव च ।
पिप्पली शृङ्गवेरञ्च चूर्णमेकत्र कारयेत् ॥ १० ॥
एतत्पानं प्रदातव्यं सुरया क्रमिनाशनम् ।
चूर्णपानप्रयोगोऽयं श्लेष्मकोष्ठे प्रशस्यते ॥ ११ ॥
मन्दाग्निदीपनोऽत्यन्तं शालिहोत्रेण कीर्त्तितः ॥ १२ ॥

श्लेष्मकोष्ठनिदानचिकित्सिते ।

श्लेष्मकोष्ठी समुद्दिष्टो मन्दाहारस्तुरङ्गमः ।
क्रमिकोष्ठोदितां कुर्य्यात् श्लेष्मकोष्ठेऽपि च क्रियाम् ॥१३॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे क्रमिकोष्ठश्लेष्म-
कोष्ठचिकित्सिते षट्चत्वारिंशोऽध्यायः ।

---

## अथ सप्तचत्वारिंशोऽध्यायः ।

वातादिमूत्रग्रहणलक्षणानि ।

स्तोकं स्तोकं सफेनञ्च कृच्छ्रान्मूत्रं करोति यः ।
तस्य वातसमुत्थन्तु विद्यान्मूत्रग्रहं बुधः ॥ १ ॥
दाहोच्छ्वासयुतः पित्तान्मूत्ररोगः प्रजायते ।
वाजिनः पीतमूत्रस्य मूत्ररोगः प्रजायते ॥ २ ॥
वाजिनः पीतमूत्रस्य अथवा रक्तमूत्रिणः ।
कफजे मूत्ररोगे तु सान्द्रमूत्रं सपिच्छिलम् ॥ ३
स्तोकं स्तोकञ्च कुरुते वेदनार्त्तस्तुरङ्गमः ।
एकधा नोदयस्तेषां जायते सन्निपातजः ॥ ४ ॥
अत्र साधारणीं कुर्य्याच्चिकित्सां वक्ष्यमाणकीम् ।

मेढ्राभ्यासे तथा वस्तिं घृतेनाभ्यज्य वातिके।
मर्दयेत्तदनुस्रोतो लघुहस्तैः शनैः शनैः॥ ५॥
पाषाणभेदकं शुण्ठी गोक्षुरं बृहतीद्वयम्।
एरण्डमूलं वर्षाभूरनन्ता च शतावरी॥ ६॥
कषायं वारिणा कृत्वा यवानां तण्डुलैर्भिषक्।
साधयित्वा ततो मण्डं पाययेद्वातमूत्रिणम्॥ ७॥
एतेनैव कषायेण मिश्रितं वा सुखावहम्।
भवेद् ग्रासश्च पानं वा वातिके मधुमूर्च्छितम्॥ ८॥

पित्तमूत्रग्रहचिकित्सा।

एर्वारुकस्य बीजानि त्रपुषस्य तु पित्तजे।
पिष्ट्वा शर्करया सार्द्धं दद्यात्तण्डुलवारिणा॥ ९॥
शृतं कशेरुशालूकैस्तथा शृङ्गाटकेन च।
पाने शस्तं स्मृतं क्षीरं शर्करेक्षुरसान्वितम्॥ १०॥
नलकाशेक्षुदर्भाणां क्वाथं पाने प्रदापयेत्।
पित्तमूत्रग्रहे वैद्यः क्षीरवस्तिञ्च बुद्धिमान्॥ ११॥
त्रिके धाराजलं देयं कर्दमालेपनं तथा।
शीतं स्थानं हितं प्रोक्तं प्रवातं व्यजनानिलम्॥ १२॥

श्लेष्ममूत्रग्रहचिकित्सा।

श्वदंष्ट्रां शृङ्गवेरञ्च पूतिकं पिप्पलीं तथा।
श्लेष्मजे मूत्ररोगे तु लाजमण्डेन दापयेत्॥ १३॥
कौलत्थं पाययेद् यूषं तिक्तमुद्गैश्च भोजनम्।
तैलाभ्यङ्गो भवेद्वस्तौ माषस्वेदः कफात्मके॥ १४॥
श्वदंष्ट्रा शृङ्गवेरञ्च पूतीकं पिप्पली तथा।
पित्तमूत्रग्रहप्रोक्तां क्रियां सर्वां प्रयोजयेत्॥ १५॥
वस्तौ प्रक्षालिते वैद्यस्तुरङ्गाणां विचक्षणः।
हितं वलितवस्तिभ्यो लाक्षापत्राङ्गचूर्णकम्॥ १६॥

मधुना सह संयुक्तं पाने गोपयसा युतम्।
मूत्रेण सह यस्य स्याद्वेदनार्त्तस्य वाजिनः॥ १७॥
शर्कराणां प्रपातस्तु स ज्ञेयो मूत्रशर्करी।
कुष्ठशिग्रुविड़ङ्गानि हिङ्गुतुम्बुरुकं तथा॥ १८॥
सैन्धवञ्चाश्मभेदञ्च कल्कं कृत्वा विचक्षणः।
तत्कल्कं यवभक्तञ्च सुरया सह मर्दयेत्॥ १९॥
मूत्रशर्करिणो दद्याद् भोजने सततं बुधः।
रजनीक्षारवृक्षस्य गालयित्वा पलाशजम्॥ २०॥
गृहीत्वा तज्जलं प्राज्ञः पुनः कृत्वा पयःसुतम्।
ब्राह्मग्रपामार्गसूक्ष्मैलाकुलत्थाष्टकवर्गकैः॥ २१॥
सुपिष्टं तेन तोयेन पानं शर्करिणो हितम्।
शुक्रं मेहति यो वाजी शुक्रमेहीति तं विदुः॥ २२॥
अयमेव विधिः कार्य्यः शुक्रमेहेऽपि वाजिनः।
वड़वां वाहयेद्वापि दृष्टकर्मा भिषग्वरः॥ २३॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे मूत्रग्रह-
चिकित्सिते सप्तचत्वारिंशोऽध्यायः।

---

## अथ अष्टचत्वारिंशोऽध्यायः।

### कुष्ठरोगलक्षणचिकित्सितम्।

अलोमिकां ग्रन्थिमतीं तथा वै व्रणसंयुताम्।
त्वचं कुष्ठमहारोगः करोत्यश्वस्य दारुणाम्॥ १॥
गवां मूत्रपुरीषाभ्यां स्वेदस्तु व्रणिनो हितः।
कुष्ठरोगेषु सर्वेषु समीपे वेधयेच्छिराम्॥ २॥
निम्बपत्रं पटोलञ्च त्रिफला खदिरं तथा।
तत्क्वाथं पाययेद्वाहं सुतरक्तं विचक्षणः॥ ३॥

सप्ताहमेतत् प्रदातव्यं पानं कुष्ठप्रशान्तये ।
ततः परं प्रयोक्तव्यं पानं यद्वक्ष्यमाणकम् ॥ ४ ॥
त्रिवृताञ्च हरिद्राञ्च मदनं कटुरोहिणीम् ।
पाटलां त्रिफलां दन्तीं निम्बं मूर्वां तथा वचाम् ॥ ५ ॥
कृत्वा कषायं मतिमान् कुष्ठरोगेषु दापयेत् ।
पानाय मधुना सार्द्धं सिद्धं भोजनमुत्तमम् ॥ ६ ॥
लोहितं चन्दनं दूर्वामुशीरं कटुरोहिणीम् ।
पिष्ट्वा निम्बपटोलञ्च व्रणे कुष्ठे प्रलेपयेत् ॥ ७ ॥
अर्काश्वमारयोः पत्रं सर्षपं पिप्पलीं वचाम् ।
मरिचं शृङ्गवेरञ्च दन्तीमूलं सचित्रकम् ॥ ८ ॥
गवां मूत्रेण संपिष्य लवणैः सह योजयेत् ।
संलिप्य तेन कुष्ठानि व्रणहीनानि मर्दयेत् ॥ ९ ॥
व्रणेषु चैव सर्वेषु तैलं सर्षपजं हितम् ।
कल्केनानेन संयुक्तमभ्यङ्गे मर्दने सदा ॥ १० ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे कुष्ठचिकित्सिते अष्टचत्वारिंशोऽध्यायः ।

---

## अथ एकोनपञ्चाशत्तमोऽध्यायः ।

### वातादिशोथलक्षणचिकित्साः ।

शोथे चिकित्सां वक्ष्यामि वातपित्तकफान्विते ।
सन्निपातसमुत्थे च रूपं पञ्चैव कीर्त्तितम् ॥ १ ॥
वेदनास्थौल्यसंयुक्तं मृदुस्पर्शञ्च शीतलम् ।
शोथं वातात्मकं विद्याद्वाजिदेहसमुद्भवम् ॥ २ ॥
रक्तपित्तेन शोथः स्यात् कृष्णपाकेन संयुतः ।
वेदनोष्णसमायुक्तो नात्यन्तोच्छूनकस्तथा ॥ ३ ॥

कठिनत्वमहत्त्वाभ्यां युक्तं रुग्दाहवर्जितम् ।
श्लेष्मशोथं विजानीयाद्रक्तजं पित्तलक्षणम् ॥ ४ ॥
सर्वलिङ्गं विदुर्वैद्याः सन्निपातसमुद्भवम् ।
द्विचिह्नं द्वन्द्वजं प्राहुर्मुनयः शास्त्रकोविदाः ॥ ५ ॥
शोथानां मारुतादीनां सर्वदोषापकर्षणम् ।
एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः ॥ ६ ॥
अनुलेपसहस्राणि अनुलेपशतानि च ।
रक्तबिन्दुविमोक्षस्य कलां नार्हन्ति षोड़शीम् ॥ ७ ॥
प्रच्छन्नेन जलौकाभिः शिरावेधेन वा भिषक् ।
सर्वेषामेव शोथानां रक्तमाकृष्य बुद्धिमान् ॥ ८ ॥
पूर्वशास्त्रसमुद्दिष्टां ततः कुर्य्यात् क्रियामिमाम् ।
भेषजैः सघृतैः सम्यक् शोथरोगोपशान्तये ॥ ९ ॥
शोथे वातसमुद्भूते तैलाभ्यङ्गः प्रशस्यते ।
स्वेदो गोमयपिण्डेन पुटैश्चैरण्डपत्रकैः ॥ १० ॥
पिप्पलीशुण्ठिवर्षाभूदेवदार्वर्कशिग्रुभिः ।
तुरङ्गाणां स्मृतो लेपः शोथे वातसमुद्भवे ॥ ११ ॥
गोधावती महाकाली वरुणालम्बुषोद्भवैः ।
मूलैर्गोमूत्रसंपिष्टैः प्रलेपस्तस्य शस्तते ॥ १२ ॥
पञ्चमूलकषायस्तु तिलतैलेन योजितः ।
प्रातः पाने प्रयोक्तव्यो भोजने च रसौदनः ॥ १३ ॥

पित्तशोथचिकित्सा ।

मञ्जिष्ठा धातकीलोध्रसारिवानन्तपद्मकैः ।
प्रलेपाः पित्तशोथेषु क्षीरवस्तिश्च कीर्त्तितः ॥ १४ ॥
कुशकाशनलेक्षूणां मूलक्वाथः सशर्करः ।
शस्तः पाने प्रभाते तु मधुमात्रासमन्वितः ॥ १५ ॥
पञ्चतिक्तकसंसिद्धैर्गव्यसर्पिःसमन्वितैः ।

भोजनं विहितं मुद्गैः शालिभिर्वा पयोऽन्वितैः ॥ १६ ॥

श्लेष्मशोथचिकित्सा।

रूक्षः स्वेदः प्रदातव्यः इष्टकासिकतापुटैः।
श्लेष्मशोथे प्रलेपश्च कर्त्तव्यो यस्तु वातजे ॥ १७ ॥
वचाव्योषविडङ्गैलाकुष्ठजीरकसैन्धवैः।
गोमूत्रपिष्टैः सुरया प्रतिपानञ्च कीर्त्तितम् ॥ १८ ॥
शुण्ठीमरिचसंयुक्ताः पिप्पली चौद्रमिश्रिताः।
सुखिन्ना भोजने शस्ताः कुलत्थास्तैलयोजिताः ॥ १९ ॥
क्रिया साधारणी कार्य्या सन्निपातसमुद्भवे।
द्वन्द्वजा द्विविधाः प्रोक्ताः शालिहोत्रादिभिः पुरा ॥ २० ॥
रक्तजे पित्तजोद्दिष्टा चिकित्सा परिकीर्त्तिता।
अभिघातोद्भवे शोथे हितं यत्तद्विवच्यते ॥ २१ ॥
पञ्चवल्कलकल्केन सघृतेन मुहुर्मुहुः।
औदुम्बरेण वा विद्वांस्तद्विलेपं प्रदापयेत् ॥ २२ ॥
पूर्वोद्दिष्टेन विधिना मोचयेत्तस्य शोणितम्।
एवमागन्तुना वाहः शोथेनाशु प्रमुच्यते ॥ २३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे शोथचिकित्सिते एकोनपञ्चाशत्तमोऽध्यायः।

---

## अथ पञ्चाशत्तमोऽध्यायः।

### मुष्करोगे

जाताण्डलक्षणचिकित्सितम्।

प्रकोपान् मारुतादीनां कारणैः पूर्वचोदितैः।
अण्डस्कन्दस्तुरङ्गाणां जायते बहुसंज्ञकः ॥ १ ॥
तस्य रूपं चिकित्साञ्च भेदश्चैव समासतः।

प्रवक्ष्यामि यथायोगं वाजिनां हितकाम्यया ॥ २ ॥
वृषणौ दूषयेद्वायुः श्लेष्मणा यस्य संयुतः।
तस्य मुष्कस्थलत्येको रोगो वाताण्डसंज्ञकः ॥ ३ ॥
यदण्डं कम्पतेऽश्वस्य तेन पादेन खञ्जति।
स्तब्धपृष्ठस्य तस्याशु वेदना मुष्कयोर्भवेत् ॥ ४ ॥
औपाण्डीं वेधयेत्तस्य शिरां पूर्वं विचक्षणः।
अभ्यङ्गञ्च भिषक् कुर्य्यान्मुष्कयोः सर्पिषा ततः ॥ ५ ॥
सुखोष्णे रोदनं शस्तं क्षीरैर्गव्यादिभिस्तथा।
अनुवासनञ्च कर्त्तव्यं तैलैस्त्रिवृतपूर्वकैः ॥ ६ ॥
हयगन्धस्य वृक्षस्य मूलमुत्कृत्य पेषयेत्।
सघृतं दापयेद्वाहे वातार्त्तस्तेन सिध्यति ॥ ७ ॥
सौवर्चलं रसोनञ्च हिङ्गुसौवर्चलान्वितम्।
सघृतं कुष्ठसंयुक्तं दापयेत्तद्बुधो भिषक्।
निहन्त्यामयमण्डानां सप्तकं वा द्विसप्तकम् ॥ ८ ॥
कुलत्थयवकोलानां पञ्चमूल्यास्तथैव च
क्वाथेन तैलयुक्तेन निरूहं संप्रयोजयेत् ॥ ९ ॥
मांसानां रसकैः स्निग्धैर्भोजनं तत्र शस्यते।
ग्रासे दूर्वार्जुनौ वापि जलं कूपात् समुद्धृतम् ॥ १० ॥
ग्रासप्रतिहतो यस्तु कृच्छ्रमूत्रपुरीषयोः।
तच्च पृष्ठे समाध्मातो न स शक्यश्चिकित्सितुम् ॥ ११ ॥

पित्ताण्डलक्षणचिकित्सितम्।

शूनता मुष्कयोश्चैव रक्तता कृष्णतापि वा।
भवेत् पित्तेन दुष्टेन पिड़कानाञ्च सम्भवः ॥ १२ ॥
शिरावेधस्तथाभ्यङ्गो वाताण्डे यः प्रकीर्त्तितः।
कर्त्तव्यः स तु पित्ताण्डे यदन्यच्च प्रचक्षते ॥ १३ ॥
कङ्कोलमुस्तकाश्मर्य्यवाजिगन्धेक्षुसाधितः।

क्काथः पाने हितस्तस्मै शर्करामधुमूर्च्छितः॥ १४॥
पञ्चवल्कस्य कल्कश्च सर्पिषा सह योजितः।
प्रदातव्यः प्रलेपाय गोक्षुरश्च निरूहणे॥ १५॥
मुस्तवालकधन्याकं क्कथितं शीतलीकृतम्।
तोयं पाने प्रदातव्यं ग्रासे दूर्वा च शस्यते॥ १६॥

श्लेष्माण्डलक्षणचिकित्सितम्।

शूनौ तु कठिनौ रूक्षौ वृषणौ मन्दवेदनौ।
कृच्छ्रमूत्रस्य वाहस्य मूत्रकोशश्च शूयते॥ १७॥
श्लेष्माण्डः स तु विज्ञेय श्रीपाण्डीं वेधयेच्छिराम्।
निरूहं कटुतैलेन चाङ्गे स्वेदं च कारयेत्॥ १८॥
कुष्ठैलातिविषा लोध्रवचाव्योषहरेणुभिः।
पानं कल्कीकृतैः शस्तं सुरामध्वासवान्वितम्॥ १९॥
पञ्चतिक्तकसंसिद्धैः कुर्य्यान्मुद्गैश्च भोजनम्।
पिप्पलीक्षौद्रसंयुक्तैस्तैलशुण्ठीसमन्वितैः।
व्योषक्षौद्रसतैलैश्च कुलत्थैर्वापि भोजयेत्॥ २०॥
भ्रामणञ्च तुरङ्गस्य सायं प्रातः शनैर्हितम्।
शुष्को घासः प्रदातव्यः शृतशीतं जलं तथा॥ २१॥
किराततिक्तकच्छूनामार्द्रकाणां समायुतम्।
पिण्डं वा देयमश्वस्य श्वयथुव्याधिशान्तये॥ २२॥

पूताण्डलक्षणचिकित्सितम्।

शूनौ पक्वौ तुरङ्गस्य मुष्कौ यस्य सवेदनौ।
त्रिकस्तम्भेन युक्तस्य तस्य पूताण्डमादिशेत्॥ २३॥
वाताण्डविहितस्तत्र शिरावेधः प्रशस्यते।
घृताभ्यङ्गश्च कर्त्तव्यो मुष्कयोस्तस्य वाजिनः॥ २४॥
पिप्पली लोध्रयष्ट्याह्वैरेलवालुकसंयुतैः।
पानं तस्मै हितं दृष्टं सिन्धुमध्वा समन्वितम्॥ २५॥

वर्षाभूसरला श्यामा लोध्रचन्दनपद्मकैः ।
तोयपिष्टैः प्रलेपस्तु मुष्कयोः परिकीर्त्तितः ॥ २६ ॥
अनया वाजिनो रोगः क्रमया शान्तिमृच्छति ।
विपाट्य मुष्कौ शस्त्रेण तदाण्डमपकर्षयेत् ॥ २७ ॥
हस्तेनाकृष्य मुष्काण्डं नाड़ीं बद्धा दृढ़ं भिषक् ।
सुवर्त्तितेन सूत्रेण तच्छिन्द्याच्च विचक्षणः ॥ २८ ॥
वह्नितप्तेन शस्त्रेण तद्व्रणेन सुनिश्चितम् ।
रक्तमेवं तुरङ्गस्य प्रशमं नैव गच्छति ॥ २९ ॥
अग्निवर्णेन येनैव छिन्द्याच्छस्त्रेण दुर्बुधः ।
अवद्धा सुदृढ़ं नाड़ीं तस्य कर्म न सिध्यति ॥ ३० ॥
आकृष्याण्डं भिषङ् मुष्कं पूरितं मधुसर्पिषा ।
चीरवृक्षकषायेण व्रणवत् समुपाचरेत् ॥ ३१ ॥
प्रशस्तं गुग्गुलोः पानं त्रिफलाक्वाथयोजितम् ।
तच्चङ्क्रमणशीलस्य घृताभ्यक्तस्य वाजिनः ॥ ३२ ॥
निपात्य भूमौ तुरगं बद्धा चैव दृढ़ं बुधः ।
उत्तानस्य विनिःक्षिप्य पृष्ठं गर्त्तिस्तथैव च ॥ ३३ ॥
पातनादि ततः कर्म कुर्य्यात्तुच्छाण्डरोगिणः ।
दृढ़कर्मा प्रगल्भश्च शास्त्रविच्च भिषग्वरः ॥ ३४ ॥

रक्ताण्डलक्षणचिकित्सितम् ।

स्पर्शतः कठिनौ रूक्षौ रूपतश्चैव यौ मृदू ।
वृषणौ यस्य वाहस्य स रक्ताण्डः प्रकीर्त्तितः ॥ ३५ ॥
तस्मिन् सर्वाः प्रयोक्तव्याः क्रियाः पोताण्डशोधिताः ।
क्षिप्रं सिद्धिर्भवत्येव वैद्यानां शास्त्रशालिनाम् ॥ ३६ ॥
भिषग्वरः प्रयुञ्जीत दुष्टानां मुष्ककालनम् ।
भ्रमणञ्च विशेषेण तेषां कुर्य्याद्दिसप्तकम् ॥ ३७ ॥
भ्रमतामेव दातव्यं जलं ग्रासास्तथैव च ।

घृताभ्यङ्गं च सततं व्रणे गात्रे च वाजिनाम् ॥ ३८ ॥
दातव्यो गुग्गुलुस्तावत् त्रिफलाक्वाथयोजितः।
रूढं यावद् व्रणं तेषां जायते निरुपद्रवम् ॥ ३९ ॥
खादकः खादकश्चैव विरोधी च विशेषतः।
मुष्कयोर्लागनं वाजी प्रतिहन्ता च सिध्यति ॥ ४० ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे मुष्करोग-
चिकित्सिते पञ्चाशत्तमोऽध्यायः।

## अथ एकपञ्चाशत्तमोऽध्यायः।

### शीनीतरोगलक्षणम्।

गुरुभिर्भोजनैर्ग्रासैरभिष्यन्दकरैस्तथा।
अष्टस्याकर्मिणोऽश्वस्य हयीमनभिगच्छतः ॥ १ ॥
स्वस्थानात् प्रच्युतं शुक्रं मेहने प्रतिहन्यते।
तेन शुक्राभिघातेन मूत्रकृच्छ्रं प्रजायते ॥ २ ॥
ततो रक्तप्रकोपेण शूलं भवति मेहने।
प्रक्लिन्नं प्रबलं पक्वं कण्डूमत्पिडकान्वितम् ॥ ३ ॥
स्वस्थाने प्रविशेन्नैव मक्षिकाभिः समावृतम्।
शीनीताख्यं तमातङ्कं निर्दिशेत्तस्य वाजिनः ॥ ४ ॥

### चिकित्सा।

उपाण्डश्चैव कोष्ठञ्च मात्रायान्तु विरेचयेत्।
शान्तयेन्मूत्रकोपञ्च स्नानं वाज्येन सेवयेत् ॥ ५ ॥
क्षारतैलं जलं कोष्णं पानार्थञ्च प्रदापयेत्।
खदिरचौरिणां क्वाथः सुखोष्णो व्रणधावनः ॥ ६ ॥
तिलक्षारैः पयःस्विन्नैः ससर्पिष्कैः प्रलेपनम्।
धूपनं कटुमध्वाज्यैरालापीलुदारुभिः ॥ ७ ॥

सप्तपत्रसल्लक्या धवस्याश्वधस्य च ।
कुटजस्य त्वचश्चैव चूर्णिता व्रणरोपणाः ॥ ८ ॥
लवङ्गानि हरिद्रे च सूर्य्यवल्ली सरोचना ।
अरुष्करोऽग्निकदरः त्रिफलानिकुटत्वचः ॥ ६ ॥
एभिस्तैलं सगोमूत्रं साधितं व्रणरोपणम् ।
भोजयेत्तिल्लमुद्गांश्च मधुतैलकणान्वितान् ॥ १० ॥

इति श्रीमहासामन्तजयदत्तविरचितेऽश्वशास्त्रे श्रोनीतरोग-
चिकित्सिते एकपञ्चाशत्तमोऽध्यायः ।

---

## अथ द्विपञ्चाशत्तमोऽध्यायः ।

### अष्टविधोदरनामलक्षणानि ।

अष्टभेदस्य वक्ष्यामि उदरस्य यथाक्रमम् ।
चिह्नं चिकित्सितञ्चैव यथा शास्त्रे व्यवस्थितम् ॥ १ ॥
वातजं पित्तजञ्चैव कफजं सन्निपातजम् ।
प्लीहोदरं बद्धगुदं परिस्राव्युदकोदरम् ॥ २ ॥
आध्मातमुदरं यस्य वाजिनो वेदनान्वितम् ।
वर्च्चसो रूक्षता चैव सशब्दश्चैव मारुतः ॥ ३ ॥
पुरीषे च कृते यस्य गुदं निर्य्याति सर्वदा ।
क्षीणस्याल्पाशनस्यैव तस्य वातोदरं वदेत् ॥ ४ ॥
हारिद्रविग्महाकुक्षिः कृशः स्वेदी महाशनः ।
उष्णनिःश्वाससंयुक्तो भवेत् पित्तोदरी हयः ॥ ५ ॥
उदरं वर्द्धते यस्य मन्दाग्नेः शोथसंयुतम् ।
अलसस्य कृशस्यैव विन्द्यात् श्लेष्मोदरं भिषक् ॥ ६ ॥
वातपित्तकफानान्तु रूपं यस्य च दृश्यते ।
सन्निपातसमुत्थानं तद् विन्द्यादुदरं महत् ॥ ७ ॥

वर्णान्यत्वं महत्त्वञ्च काठिन्यञ्च विशेषतः।
प्लीहोदरे विजानीयाद्देहे च कृशतां तथा ॥ ८ ॥
अल्पमल्पं पुरीषन्तु कृच्छ्राद्वातं प्रमुञ्चति।
आध्मातकुक्षिर्यो वाजी तस्य बद्धगुदं वदेत् ॥ ९ ॥
आध्मातकोष्ठः कुरुते फेनिलं रक्तमेव च।
परिस्रावोदरी मूत्रं दाहरुग्वर्जितं सदा ॥ १० ॥
अत्यन्ताध्मानकञ्चैव जलपूर्णमिवोदरम्।
कृशस्य यस्य वाहस्य भवेत्तस्योदकोदरम् ॥ ११ ॥

वातोदरचिकित्सा।

पञ्चमूलकषायेण सहितां तैलसंयुताम्।
यवागूं भोजयित्वा तु ततः स्नेहैर्निरूहयेत् ॥ १२ ॥
पिप्पलीलवणक्षारपाठाचित्रकहिङ्गुभिः।
कल्कीकृतैः पचेत्तैलं मूत्रैर्गोमाहिषादिभिः ॥ १३ ॥
तस्मिन्नेव त्रिवृच्चूर्णं स्नुहीदुग्धेन भावितम्।
पलार्द्धमात्रया क्षिप्त्वा पचेत्तैलं विचक्षणः ॥ १४ ॥
बलं वीक्ष्य तुरङ्गस्य तैलपानं प्रदापयेत्।
अतिपानप्रयोगेण मृत्योर्गोचरमृच्छति ॥ १५ ॥
पीततैलं विरिक्तञ्च दूर्वाघासेन पोषयेत्।
आध्मानादुदरस्यैव पुनः कुर्य्यात् क्रियामिमाम् ॥ १६ ॥
त्रिवृद्दन्ती वचा चैव कषायेण च साधितम्।
वातोदारे घृतं शस्तं पाने युक्त्या प्रयोजितम् ॥ १७ ॥

पित्तोदरचिकित्सा।

पिप्पली शृङ्गवेरञ्च दन्त्यारग्वधचित्रकम्।
दध्ना मूत्रं ततस्तैलं पचेन्मृद्वग्निना बुधः ॥ १८ ॥
पित्तोदराभिभूतस्य पानमेतत् प्रदापयेत्।
हिङ्गुयुक्तं तुरङ्गस्य यथाग्नि च यथाबलम् ॥ १९ ॥

श्लेष्मोदरचिकित्सा।

वातोदरे समुद्दिष्टां श्लेष्मजे कारयेत् क्रियाम्।
सन्निपातसमुत्थे तु कुर्य्यात् साधारणीं क्रियाम्॥ २०॥
पिण्डीकृतं त्रिकटुकं चारसैन्धवयोजितम्।
दत्त्वानुपाययेत् मूत्रं माहिषं वाथ सौरभम्॥ २१॥
प्रति प्रभाते कर्त्तव्यं तुरङ्गस्य यथाबलम्।
प्लीहोदरविनाशाय विधिरेष विजानता॥ २२॥
या क्रिया विहिता पूर्वं वातोदरचिकित्सिते।
सैव बद्धगुदे कार्य्या सस्रावे पित्तजेऽपि वा॥ २३॥
बद्ध्वा वाहं दृढं विद्वान् धरण्यां विनिपातयेत्।
उदकोदरे ततः कर्म कुर्य्याद्भिषगतन्द्रितः॥ २४॥
हृदयस्याधरे भागे ऊर्द्ध्वभागे च नाभितः।
अधो वा नाभितः कुर्य्याच्छेदनं चतुरङ्गुले॥ २५॥
शस्त्रेणोत्पलपत्रेण वामभागे विचक्षणः।
एकमेवाङ्गुलं शस्त्रं कुक्षौ चापि प्रवेशयेत्॥ २६॥
वेधव्रणे ततस्तस्मिन् नालिकां वस्त्रवेष्टिताम्।
प्रक्षिप्य गालयेद्वारि यावद्वै कोष्ठलाघवम्॥ २७॥
स्वच्छतोयपरिस्रावे तदसाध्यं समादिशेत्।
आलोहिते सरक्ते वा साध्यं विद्वान् समादिशेत्॥ २८॥
आकृष्य नलिकां प्राज्ञः पट्टकेन तथा व्रणम्।
घृतप्लुतेन बध्नीयाद्दत्त्वा कर्पटचीरकम्॥ २९॥
मुक्त्वा चोत्थाप्य वाहन्तु वाग्भिः प्रसारयेद्भिषक्।
कषायैः क्षीरवृक्षाणां व्रणञ्चाश्वशोतयेत्ततः॥ ३०॥
विद्धोदरस्य वाहस्य निर्वाहणमयौक्तिकम्।
उदकञ्चैव घासञ्च नो दद्याद्दिवसत्रयम्॥ ३१॥
ततो दूर्वा प्रदातव्या उदकञ्चापि संस्कृतम्।

कथितं चीरवृक्षाणां वल्कलैर्मधुयोजितम् ॥ ३२ ॥
ततो रूढ़व्रणं बुद्धा सञ्जातबलमेव च।
एतान् वै खादने दद्यात् युक्त्या चैव सुसंस्कृतान् ॥ ३३ ॥

इति श्रीमन्महासामन्तजयदत्तकृतेऽश्वशास्त्रे उदर-
चिकित्सिते द्विपञ्चाशत्तमोऽध्यायः।

---

# अथ त्रिपञ्चाशत्तमोऽध्यायः।

## अर्शोलक्षणम्।

कृशो रूक्षश्च मन्दाशी बलहीनशिरान्वितः।
अर्शसा क्रियते वाजी गुदमार्गगतेन च ॥ १ ॥
जम्बूवदरखर्जूरफलरूपश्च तद्भवेत्।
गुदाभ्यन्तरजं मांसमेकद्विबहुसंख्यकम् ॥ २ ॥

## तच्चिकित्सा।

क्रियां तस्य प्रवक्ष्यामि यथशास्त्रं समासतः।
येन शाम्यति वाहानां भृशमर्शो विवर्द्धितम् ॥ ३ ॥
यन्त्रं षड़ङ्गुलं विद्वान् छिद्रं पञ्चाङ्गुलं भिषक्।
अधोऽर्द्धाङ्गुलविस्तीर्णं दैर्घ्येणाप्यङ्गुलत्रयम् ॥ ४ ॥
उभयोः पार्श्वयोस्तस्य कुर्य्याच्छिद्रद्वयं बुधः।
अर्शस्तेन तु वाहस्य द्विच्छिद्रेण विलोकयेत् ॥ ५ ॥
एकच्छिद्रेण वै कर्म कुर्य्याच्छेदादि पूर्वकम्।
पातितस्य सुवद्धस्य तुरगस्य विचक्षणः ॥ ६ ॥
घृताभ्यक्ते गुदे चिप्त्वा युक्त्या यन्त्रं द्विच्छिद्रकम्।
ततः सम्यक् समासेन अर्शस्तद्बुद्धिमान् भिषक् ॥ ७ ॥
यन्त्रं द्विच्छिद्रमाकृष्य प्रक्षिपेदेकरन्ध्रकम्।

यन्त्रं छिद्रान्तरस्थन्तु अर्शः कृत्वा विचक्षणः ॥ ८ ॥
छित्त्वा तीक्ष्णेन शस्त्रेण दहेल्लौहशलाकया ।
सम्यग्दग्धं भिषग्बुद्ध्वा मधुयुक्तेन सर्पिषा ॥ ९ ॥
लेपयेद् व्रणदेशन्तु यन्त्रञ्चैवापकर्षयेत् ।
मुक्त्वा वाहं समुत्थाप्य वाजिं वातेषु चारयेत् ॥ १० ॥
अतिशीतं जलं मूर्ध्नि त्रिके चापि प्रदापयेत् ।
तस्यां रात्रौ प्रदातव्यो घासो वाहस्य यत्नतः ॥ ११ ॥
त्रिफलाक्वाथसंयुक्तं प्रातर्दद्याच्च गुग्गुलुम् ।
शृतशीतं जलं पाने घासे दूर्वा च शस्यते ॥ १२ ॥
सप्त पञ्च प्रदातव्यः त्रिफलाक्वाथयोजितः ।
ततो जातबलं बुद्ध्वा तुरगं भिषजां वरः ॥ १३ ॥
यथेष्टाहारचेष्टन्तु कारयेत् क्रमशः पुनः ।
वातजं श्लेष्मजं बुद्ध्वा साधयेदग्निना भिषक् ॥
पित्तजं सम्यगालोक्य दहेत् क्षारेण बुद्धिमान् ॥ १४ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे अर्शश्चिकित्सिते त्रिपञ्चाशत्तमोऽध्यायः ।

---

## अथ चतुःपञ्चाशत्तमोऽध्यायः ।

### उत्कर्णलक्षणचिकित्सितम् ।

कर्णौ स्तब्धौ तथा पुच्छं स्तब्धं गात्रमकिञ्चन ।
वातात्मकेन वाहस्य भवेदुत्कर्णकेन हि ॥ १ ॥
वसया घृततैलेन तस्याभ्यङ्गः प्रशस्यते ।
प्रसारण्यादिभिस्तैलैः कुर्य्याच्चैवानुवासनम् ॥ २ ॥
अतसीभिः शणैर्माषैस्तिलधान्यैर्यवैस्तथा ।
वस्त्रबद्धपुटः स्वेदः शस्तः काञ्जिकसाधितैः ॥ ३ ॥

जङ्घा भासस्य सपस्य जाङ्गलैः साधिता रसः।
तस्मै पाने हितो दृष्टः शाल्यन्नेन च भोजनम् ॥ ४ ॥
शौकरैर्माहिषैश्छागैरसैर्वा तदभावतः।
पञ्चमूलकषायेण सिद्धस्तैलेन भावितः ॥ ५ ॥
गुड़तैलयुता वापि सुरा पाने प्रशस्यते।
शुनः छित्वा शिरो रक्तं गृहीत्वा दापयेत् ततः ॥ ६ ॥
छागमार्जारमेषाणां रक्तं सद्यः स्रुतं भिषक्।
दापयेत् पञ्चमूलस्य कषायेण समन्वितम् ॥ ७ ॥
पञ्चमूलकषायेण कृत्वा मांसरसं बुधः।
यवागूं साधयेत्तेन तिलमिश्रैश्च तण्डुलैः ॥ ८ ॥
वसया तिलतैलेन सर्पिषा चापि संस्कृतम्।
भोजने तां भिषग्दद्यादुत्कर्णकनिवारणीम् ॥ ९ ॥
ग्रासार्थं दापयेद्दूर्वां पाने चोष्णजलं पिबेत्।
त्रिवृताद्यैस्तथा तैलैः कर्णयोस्तस्य पूरणम् ॥ १० ॥
उत्कर्णको यदाश्वस्य क्रियया नोपशाम्यति।
वह्निं प्रदापयेत् कुक्षौ ललाटे कर्णयोस्तथा ॥ ११ ॥
ग्रासद्वेषी सदाध्मातः कृच्छ्रमूत्रपुरीषकृत्।
लालाव्रणयुतः श्वासी उत्कर्णी नैव जीवति ॥ १२ ॥
स्वेदस्निग्धो निवातञ्च स्थानं प्रावरणानि च।
पयांसि भोजने स्वादुकट्वम्ललवणानि च।
बृंहणं सर्वथा वैद्यः कुर्य्यादुत्कर्णपीड़िते ॥ १३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे उत्कर्णचिकित्सिते
चतुःपञ्चाशत्तमोऽध्यायः।

# अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

## वातव्याधौ

### मन्यास्तम्भादिलक्षणानि ।

नमत्युन्नमति ग्रीवा स्तब्धा च यस्य वाजिनः ।
मन्यास्तम्भं विजानीयाद्रोगं तस्य सुदारुणम् ॥ १ ॥
एवंविधायां ग्रीवायां स्फुरणं यस्य विद्यते ।
मन्याचालीति तं विद्यान्मन्दाहारं तुरङ्गमम् ॥ २ ॥
संगृहीतौ हनू यस्य निश्चलौ यस्य वाजिनः ।
लाला स्रवति चात्यन्तं विन्द्यात्तस्य हनुग्रहम् ॥ ३ ॥
स्तब्धं पृष्ठोन्नतश्चैव रन्ध्रौ च्छिन्नस्य यस्य च ।
तस्य पृष्ठग्रहं रोगमूर्द्ध्वग्रीवस्य निर्दिशेत् ॥ ४ ॥
एकः प्रलम्बते कर्णः शरीरार्द्धञ्च शुष्यति ।
शूनो भवति चाश्वस्य रोगे चैकाङ्गसंज्ञके ॥ ५ ॥
संत्रासी चैव यः पूर्वं पुनः स्वस्थो भृशं भवेत् ।
प्रस्विन्नाङ्गस्य तस्याशु मृगरोगं समादिशेत् ॥ ६ ॥
मृगरोगी यदा वाजी जृम्भावान् जायते मुहुः ।
मृगजृम्भं तदा तस्य व्याधिं समुपलक्षयेत् ॥ ७ ॥
गत्वा यः पूर्वकायेण पुनः पश्चाच्च गच्छति ।
स्तब्धाङ्गो वेदनार्त्तश्च तस्याक्षेपकमादिशेत् ॥ ८ ॥
वक्रः पश्चिमकायेन मण्डलैर्यो विचेष्टते ।
मन्दग्रासश्च दीनश्च भ्रामिताक्षो रजोवृतः ॥ ९ ॥
पश्चात् कायेन यो वाजी भूमिं गत्वा निषीदति ।
खेदश्चाग्रिमकायेण स्वस्थश्च परिवर्त्तते ॥ १० ॥
कृच्छ्रादुत्थापितश्चापि पुनर्यो याति मेदिनीम् ।
कपोतकनिषादीति स ज्ञेयः कृच्छ्रजीवनः ॥ ११ ॥

हनुहयस्य विक्षेपाद्घोणाभेदाच्च बुद्धिमान्।
नासापुटविकाराच्च रोगमर्दितमादिशेत्॥ १२॥

एषां चिकित्सा।

एते वातात्मका रोगा मन्यास्तम्भादयः स्मृताः।
उत्कर्णकक्रियाः सर्वा वाहानां तेषु कारयेत्॥ १३॥
उत्कर्णकचिकित्सा च पानमेतद् विशिष्यते।
कपोतकनिषादस्य तद्विन्याद्वक्ष्यमाणकम्॥ १४॥
हरितान् यावशूकांश्च पिष्ट्वालम्बुषया सह।
आलोड्य तिलतैलेन ततः पानं प्रदापयेत्॥ १५॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे वातव्याधि-
चिकित्सिते पञ्चपञ्चाशत्तमोऽध्यायः।

---

## अथ षट्पञ्चाशत्तमोऽध्यायः।

### उन्मादनिदानलक्षणम्।

यद्युन्मादः समुद्दिष्टः श्लेष्मपित्तसमुद्भवः।
तथापि न विना वातमुन्मादो जायते ध्रुवम्॥ १॥
प्रकोपकारणैः प्रोक्तैः कुपिते मातरिश्वनि।
उन्मादो जायतेऽश्वस्य तस्य रूपञ्च वक्ष्यते॥ २॥
यातुमिच्छति यः स्थित्वा रज्जुं दन्तैश्च खादति।
खादत्यकस्माद् यवसं पुनश्चैव न खादति॥ ३॥
कदाचिद् बुध्यते संज्ञां कदाचिच्च न बुध्यते।
स्वभावान्यत्वसंयुक्तं तद्बुद्ध्वा कारयेत् क्रियाम्॥ ४॥
हिङ्गुयुक्तं पुराणस्य सर्पिषः पानमुत्तमम्।
उन्मादिनस्तुरङ्गस्य घृताभ्यङ्गस्तु सर्वदा॥ ५॥

उल्कर्णकादिरोगेषु साग्निकर्माणि यानि तु।
भोजनाभ्यङ्गपानानि निरूहास्थापनानि च ॥ ६ ॥
तानि चास्य प्रयोज्यानि बद्धा चैव दृढं हयम्।
अबद्धेषु क्रियां कर्त्तुं नैवोन्मादिषु शक्यते ॥ ७ ॥
निम्बपत्रवचाकुष्ठलाक्षालवणहिङ्गुभिः।
गोलोमखुरशृङ्गैश्च पीतसिद्धार्थकैर्यवैः ॥ ८ ॥
उलूककाकपक्षैश्च भूतकेशैश्च पांशुभिः।
सर्पनिर्मोकसंयुक्तैः कुर्य्याच्चूर्णं विचक्षणः ॥ ९ ॥
अर्ककाष्ठाग्निना धूमं तेन चूर्णेन दापयेत्।
घृतयुक्तेन वाहानामुन्मादव्याधिशान्तये ॥ १० ॥
गोकुरङ्कगोधानां शिखिनः शशकस्य च।
पित्तानि दापयेत् प्राज्ञो यथालब्धानि वा पुनः ॥ ११ ॥
रसोनहिङ्गुतगरान् कुष्ठसर्षपसैन्धवान्।
मनःशिलाश्च संयुक्तां पित्तैः सार्द्धं प्रदापयेत् ॥ १२ ॥
महिषच्छागमूत्रेण वर्त्तिं कृत्वा ततः पुनः।
उन्मादितेषु सर्वेषु तया कुर्य्यात्तथाञ्जनम् ॥ १३ ॥
तया छायां विनिष्क्रास्य जायते सुखमुत्तमम्।
अश्वगन्धावचाकुष्ठरोचनामधुसर्षपैः।
रसार्थं पुटिका कार्य्या कण्ठे कर्पटवेष्टिता ॥ १४ ॥
गोमूत्रघृतदुग्धैश्च दध्ना च गोमयेन च।
पञ्चगव्यं पचेत् सर्पिस्तस्य पानार्थमुत्तमम् ॥ १५ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे उन्मादचिकित्सिते षट्पञ्चाशत्तमोऽध्यायः।

# अथ सप्तपञ्चाशत्तमोऽध्यायः ।

## ग्रहनामलक्षणानि ।

दृश्यन्ते यानि लिङ्गानि ग्रहदोषेण वाजिनाम् ।
तानि सम्यक् प्रवक्ष्यामि ग्रहनामानि यानि तु ॥ १ ॥
लोहिताक्षो विरूपाक्षो हरिर्बलिस्तथैव च ।
स काशी चैव विख्यातः संकाशी च परः स्मृतः ॥ २ ॥
सुसंस्थितश्च कौवेरो वैशाखश्च मृदुग्रहः ।
ऊर्द्ध्वश्च दारुणश्चैव षड्विधो वरुणग्रहः ॥ ३ ॥
बृहस्पतिश्च सोमश्च तथा सूर्य्यग्रहोऽपरः ।
एते प्रोक्ता ग्रहाः सर्वे दारुणा मुनिसत्तमैः ॥ ४ ॥
एतैर्दृष्टाः स्फुटं वाहा नैव जीवन्ति सर्वदा ।
चिह्नं सर्वं प्रवक्ष्यामि यथा शास्त्रे व्यवस्थितम् ॥ ५ ॥
भवन्ति विन्दवो रक्ता अकस्माद् यस्य चक्षुषः ।
लोहिताक्षगृहीतोऽश्वो ग्रासद्वेषी च जायते ॥ ६ ॥
प्रस्विन्नगुरुगात्रश्च लुब्धचंक्रमणक्रियः ।
कम्पते पूर्वकायस्तु निश्चलो यस्य पश्चिमः ।
पश्चाल्लङ्गी सकम्पश्च खिद्यते हरिपीड़ितः ॥ ८ ॥
मीलतोन्मीलता चाक्ष्णा स्वभावान्नित्यमेव च ॥ ७ ॥
विरूपाक्षगृहीते तु कम्पः स्वेदश्च जायते ।
उत्थितः सहसा यस्तु मूर्च्छा पतति भूतले ॥ ९ ॥
स्तब्धाक्षो मुच्यते केशैस्तथा बालैः खुरैरपि ।
वलिग्रहगृहीतोऽसौ स्तब्धकर्णशिरोधरः ॥ १० ॥
अकस्माद्यस्य लोमानि शीर्य्यन्ते यश्च लङ्गति ।
शूनपश्चिमपादश्च तस्य काशिग्रहं वदेत् ॥ ११ ॥

सहसा कुपितो वाजी स्वानि गात्राणि खादति ।
प्रोथते सततश्चैव संकाग्निग्रहपीड़ितः ॥ १२ ॥
ह्रेषते सततं यस्तु पश्चादात्मानमीक्षते ।
सुसंस्थितग्रहाविष्टः स विज्ञेयो मनीषिभिः ॥ १३ ॥
खिन्नाङ्गो वेपमानश्च जानुभ्यां यश्च तिष्ठति ।
कौवेरग्रहसंदुष्टं तं विन्द्यात् कष्टजीवितम् ॥ १४ ॥
स्तब्धेन गुरुणा चैव वेपमानेन पश्चितः ।
गात्रेण विद्याद् वाहं तु वैशाखग्रहसेवितम् ॥ १५ ॥
ग्रीवां चैव तथा जिह्वां परिवर्त्य मुहुर्मुहुः ।
जृम्भते पूर्वकायेण शीतोच्छ्वासी विशोचनः ॥ १६ ॥
नोद्विजेत्त्वाहतः पृष्ठे कशया पाणिनापि वा ।
तं वै मृदुग्रहग्रस्तं दृष्ट्वैव परिवर्जयेत् ॥ १७ ॥
श्यामं जिह्वामुखं यस्य नष्टदृष्टिस्मृतिर्भवेत् ।
ऊर्द्ध्वग्रहकृतं दोषं तस्य दीनस्य निर्दिशेत् ॥ १८ ॥
तालुजिह्वे च नेत्रे च वृषणौ मेढ्रमेव च ।
श्यावं रूपं च यस्य स्याद् गात्रगौरवमेव च ॥ १९ ॥
तस्य स्वेदपरीतस्य बुद्धिमान् वरुणग्रहैः ।
कृतं दोषं महाघोरं स्तब्धाङ्गस्य विनिर्दिशेत् ॥ २० ॥
क्रोषते सततं यस्तु हृष्टरोमा तुरङ्गमः ।
स्तब्धाक्षो जृम्भतेऽत्यर्थं तस्यापि सलिलग्रहः ॥ २१ ॥
सुविस्फुरितसर्वाङ्गः सलिले निश्चलस्थितः ।
क्रोषते विस्वरं वाजी वरुणग्रहपीड़ितः ॥ २२ ॥
मुहूर्त्तावस्थितस्तोये जानुभ्यां योऽवगच्छति ।
मुखपाकश्च यस्यान्ते तं विन्द्यादुदकग्रहम् ॥ २३ ॥
उद्वर्त्तिताक्षः खिन्नश्च संगृहीतहनुश्च यः ।
कम्पमानश्च यो वाजी स रविग्रहपीड़ितः ॥ २४ ॥

स्तब्धग्रीवो न जानाति कशाघातं सुदुर्मनाः।
जलग्रहगृहीतोऽश्वो वामपार्श्वेन निश्चलः॥ २५ ॥
शूनाक्षिकूटो रक्ताक्षः कृशः स्खलति यो मुहुः।
बृहस्पतिगृहीतोऽसौ नैव जीवति तादृशः॥ २६ ॥
कम्पते पूर्वकायेण स्वल्पपानाशनश्च यः।
शेते प्रसार्य्य गात्राणि शीताङ्गः सोमपीड़ितः॥ २७ ॥
रक्ताक्षः शूनकण्ठश्च कम्पमानश्च श्वासयुक्।
फेनतीव्राङ्गखेदश्च ग्रस्तः सूर्य्यग्रहेण सः॥ २८ ॥
उदके तत्समीपे वा प्रायो गृह्णाति दारुणः।
तुरङ्गं सत्वहीनन्तु षड्विधो वारुणग्रहः॥ २९ ॥
यज्ञभूमिचिताचैत्यशून्यवेश्मसुरालये।
लोहिताद्यादयो रोषाद् ग्रहा गृह्णन्ति वाजिनः॥ ३० ॥
एवंविधैर्निदानैस्तु ग्रहदोषं विनिर्दिशेत्।
वातपित्तकफानान्तु निदानैर्व्याधिमादिशेत्॥ ३१ ॥
एकाकारेण रोगेण म्रियते वा हयो यदा।
तुरङ्गाणां तदा ज्ञेया उपसर्गाः सुदारुणाः॥ ३२ ॥
ग्रहदोषेषु सर्वेषु उपसर्गांस्तथैव च।
अथोक्ताश्च महाशान्तिं गान्धर्वीञ्च प्रयोजयेत्॥ ३३ ॥
अश्वरक्षाविधानाय ऋक्षं सम्मान्य पावकम्।
जुहुयाद् घृतसंयुक्तं शुचिः स्नात्वा सुपूजितः॥ ३४ ॥
शान्तिकं कारयेत् कर्म बलिञ्चापि प्रयोजयेत्।
ग्रहदोषेषु सर्वेषु शान्तिकर्माणि कारयेत्॥ ३५ ॥
देवद्विजप्रव्रजितगुरुवृद्धान् यतीनपि।
तोषयेद्भोजनैर्दानैर्वस्त्रगोकाञ्चनादिभिः॥ ३६ ॥
रात्रौ शालासमीपे तु बलिं दद्यात् चतुर्दिशम्।
मत्स्यमांसैश्च पक्वान्नैः कृशरैः पायसादिभिः॥ ३७ ॥

त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
नीराजनविधिं कृत्वा नयेदश्वान् पृथक् पृथक् ॥ ३८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे ग्रहगृहीत-
चिकित्सिते सप्तपञ्चाशत्तमोऽध्यायः ।

---

## अथ अष्टपञ्चाशत्तमोऽध्यायः ।

### वातादिशोषलक्षणानि ।

वातादिदोषजातानां शोषाणामनुपूर्वशः ।
लक्षणञ्च चिकित्सां च प्रवक्ष्यामि समासतः ॥ १ ॥
आध्मातकुक्षिर्यस्य स्याद् रूक्षः कार्शः कृशस्य च ।
मूत्रकृच्छ्रं ततश्चैव भिन्नफेनिलविड्बलम् ॥ २ ॥
प्रत्यहं हीयमानस्य मन्दग्रासस्य तस्य वै ।
भिषग् वातात्मकं शोषं चित्ररोमणः समादिशेत् ॥ ३ ॥
कार्शदौर्बल्यसंयुक्तस्तृष्णादाहसमन्वितः ।
सङ्कीर्णे रोमकेशे च पित्तशोषं विनिर्दिशेत् ॥ ४ ॥
भिन्नदीर्घाङ्गवालस्य मन्दग्रासस्य बुद्धिमान् ।
सततं हीयमानस्य भृशं कासार्दितस्य च ॥ ५ ॥
नित्यं शीतशरीरस्य निद्रातन्द्रान्वितस्य च ।
भिन्नचिह्नस्य वाहस्य शोषं श्लेष्मात्मकं वदेत् ॥ ६ ॥
सर्वलिङ्गान्वितश्चैव जानीयात् सान्निपातिकम् ।
असाध्यं वाजिनां शोषं कृच्छ्रसाध्यमथापि वा ॥ ७ ॥
गात्रं भवति दुर्गन्धि सर्वेषामेव शोषिणाम् ।
अहन्यहनि चाङ्गानि हीयन्ते च विशेषतः ॥ ८ ॥

### एतच्चिकित्साः ।

एषां चिकित्सां वक्ष्यामि मुनिभिः पूर्वनोदिताम् ।

वातादिदोषजातानां शोषाणामनुपूर्वशः ॥ ९ ॥
पञ्चमूलकषायेण कृत्वा मांसरसं बुधः।
शाल्यन्नं भोजयेत्तेन सतैललवणान्वितम् ॥ १० ॥
युक्त्या सम्भोजितं पश्चात् सञ्जाताग्निबलं सुधीः।
प्रसारिण्यादिभिस्तैलैस्ततश्चास्थापयेद् भिषक् ॥ ११ ॥
कदाचिद्वातशोषार्त्तः सिद्धिं याति न वा हयः।
विद्वद्भिः क्रियया वैद्यैः सम्यगेवं प्रयुक्तया ॥ १२ ॥
दर्भमोरटशालीनां तथाच नलकाशयोः।
मूलान्यादाय सर्वेषां क्राथयेन्मृदुनाग्निना ॥ १३ ॥
मांसैस्तेन कषायेण रसं कृत्वा विचक्षणः।
यवान्नं भोजने दद्यात् सघृतं पित्तशोषिणाम् ॥ १४ ॥
वासानिम्बकषायेण रसं कृत्वा विचक्षणः।
जाङ्गलानां तथा मांसैर्मृगाणामथ पक्षिणाम् ॥ १५ ॥
कुलत्थं सुकृतं तेन रसकेन समन्वितम्।
भोजयेन्मधुना युक्तं तैलत्रिकटुकान्वितम् ॥ १६ ॥
श्लेष्मशोषातुरं वाहं वीक्ष्य चाग्निबलं बुधः।
सन्निपातोद्भवे चापि कुर्य्याद् भेषजसङ्करम् ॥ १७ ॥
चितायां दह्यमानायां तद्धूमेन विचक्षणः।
धूपयेत् सर्वशोषे तु तुरङ्गं शास्त्रकोविदः ॥ १८ ॥
जलौकसाञ्च रक्तेन कुर्य्यान्नेत्राञ्जनं भिषक्।
पिष्टाभिः सकलाभिर्वा ताभिः शस्तमथाञ्जनम् ॥ १९ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे शोषे-
ऽष्टपञ्चाशत्तमोऽध्यायः।

## अथ एकोनषष्टितमोऽध्यायः।

### वातबलासकलक्षणचिकित्सितम्।

कफमारुतसम्भूतः स्थूरासन्धिसमाश्रितः।
शोथो वातबलासाख्यो मृदुश्चैव सवेदनः॥ १॥
तेनातिखञ्जतोऽश्वस्य स्तब्धं पर्व च जायते।
स्थौरकां वेधयेत् सम्यग् वसातैलञ्च सर्पिषा॥ २॥
पञ्चभिर्लवणैः साद्ध पाने दद्याद्भिषग्वरः।
प्राज्ञः शोथं ततस्तैश्च मर्दयेद्भिषजां वरः॥ ३॥
भग्नैः शङ्खकपालाद्यैः स्वेदैस्तं स्वेदयेद्भिषक्।
तैलयुक्तं जलं पाने ग्रासे दूर्वाञ्च दापयेत्॥ ४॥
पञ्चमूलकषायेण क्षीरयुक्तेन वस्तयः।
सुखाय विहितास्तस्य पिप्पली कल्कयोजिताः॥ ५॥
त्रैवृतेन च तैलेन कुर्य्यात्तैलानुवासनम्।
अशान्तौ वह्निना कर्म ततः सम्पद्यते सुखम्॥ ६॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे वातबलासकचिकित्सिते एकोनषष्टितमोऽध्यायः।

---

## अथ षष्टितमोऽध्यायः।

### व्यापन्नलक्षणचिकित्सितम्।

प्रभूतं लवणं यस्य भोजने वाजिनो भवेत्।
केवलं वा ततश्चास्य व्यापत् सुमहती भवेत्॥ १॥
लवणव्यापदार्त्तस्य स्वेदः श्वासश्च जायते।
जलावगाहनं शस्तं तस्य कर्दमलेपनम्॥ २॥
शर्करोदकपानञ्च हितं तस्मै प्रकीर्त्तितम्।

पयोऽनुवासनं वापि विशेषेणैव जायते ॥ ३ ॥
लवणव्यापदार्त्तस्य पिष्टालम्बुषया सह ।
आलोड्य तिलतैलेन ततः पानं प्रदापयेत् ।
हरीतकी कुष्ठकृतं दापयेत् पानमुत्तमम् ॥ ४ ॥
बहुभिः खादितैर्धान्यैर्धान्यव्यापदमादिशेत् ।
शूलचिह्नं ततस्तस्य विह्वलत्वञ्च जायते ॥ ५ ॥
सौभिच्चवर्त्तिर्विहितां कुर्य्यात्तस्य भिषक् क्रियाम् ।
अनयापि सुखी न स्यात् कुक्षौ दाहस्ततः स्मृतः ॥ ६ ॥
लवणव्यापदुक्तास्तु विधिः सर्वः प्रकीर्त्तितः ।
सुराव्यापत्परीतस्य मुनिभिः शास्त्रकोविदैः ॥ ७ ॥
क्षीरव्यापद्गृहीतोऽश्वो मन्दं पिबति खादति ।
निद्रालुर्वेदनार्त्तश्च ध्यायी गुरुशिरा भवेत् ॥ ८ ॥
पिप्पल्या हस्तिपिप्पल्या तेजोवत्या तथैव च ।
अतिविषेण शुण्ठ्या च युक्ता पाने सुरा हिता ॥ ९ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे व्यापच्चिकित्सिते षष्टितमोऽध्यायः ।

---

## अथ एकषष्टितमोऽध्यायः ।

### विषलक्षणचिकित्सितम् ।

स्थावरं जङ्गमञ्चैव विषं द्विविधमुच्यते ।
जङ्गमं प्राणिसम्भूतं स्थावरञ्चापि मूलजम् ॥ १ ॥
प्रस्वेदो रोमहर्षश्च अरुचिर्गात्रसादनम् ।
विवर्णमूत्रं लाला च भिन्नविह्वलमेव च ॥ २ ॥
लिङ्गान्येतानि वाहस्य सर्पदष्टस्य लक्षयेत् ।
स्थावरेऽप्येवमेवन्तु नो दंशस्तत्र केवलम् ॥ ३ ॥

कीटादिविषसंयुक्ते लालास्रावोऽपि जायते।
शोथो बाधप्रदेशे तु अन्यच्च सर्पदष्टवत्॥ ४॥
दत्त्वादौ घृतपानन्तु जीवरक्षाविचक्षण:।
तत: कुर्य्यात् क्रियां वैद्य: प्रच्छन्नोद्वर्त्तनादिकम्॥ ५॥
तण्डुलीयकमूलन्तु मूलं विल्वकपित्थयो:।
गोघृतेन समालोड्य सर्पदष्टे तु पाययेत्॥ ६॥
सर्पदष्टस्य वाहस्य क्षिप्रं वस्त्रेण बुद्धिमान्।
प्रच्छाययेद्दंशदेशन्तु शिरां तस्य च वेधयेत्॥ ७॥
एवं कृत्वा भिषक् चूर्णै: शीघ्रमुद्वर्त्तयेत्तत:।
शालिहोत्रादिभि: प्रोक्तैर्विषघ्नैर्वक्ष्यमाणकै:॥ ८॥
कुष्ठजीरकदन्तीभिर्नेपाली भद्रमुस्तकै:।
कट्फलेन्द्रयवागारधूमास्फोतकसैन्धवै:॥ ९॥
विड़ङ्गपिप्पलीक्षारशतपुष्पावचाजलै:।
निशातेजोवतीपाठामरिचागारधूमकै:॥ १०॥
यथाप्राप्त: समस्तैर्वा एतैश्चूर्णीकृतैर्बुध:।
दष्टस्योद्वर्त्तयेद्देशं प्रस्थितश्चैव वाजिन:॥ ११॥
प्रलेपो वा प्रदातव्य एतैर्गोमूत्रपेषितै:।
तत: शान्तिं प्रयच्छन्ति तुरङ्गे विषदूषिते॥ १२॥
चन्दनागुरुकुष्ठैश्च लोध्रभार्गीफली नखै:।
शिरीषदन्तीमूलैश्च दंशलेपो विषापह:॥ १३॥
दंशनार्त्तस्य वाहस्य दंशस्थानं विचक्षण:।
छिन्द्यात्तीक्ष्णेन शस्त्रेण मन्त्रैश्चैव विषं हरेत्॥ १४॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे विषचिकित्सिते एकषष्टितमोऽध्याय:।

---

## अथ द्विषष्टितमोऽध्यायः ।

### अपस्मारलक्षणचिकित्सितम् ।

पतत्यकस्माद् यो भूमौ स्तब्धाक्षो गतचेतनः ।
स्वस्थाशयोऽपि यः शीघ्रं सोऽपस्मारीति कीर्त्तितः ॥ १ ॥
उन्मादोक्तक्रियां सर्वां ततः कुर्य्याद्विचक्षणः ।
घृतस्यातिपुराणस्य तस्य पानञ्च शस्यते ॥ २ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे अपस्मारचिकित्सिते द्विषष्टितमोऽध्यायः ।

---

## अथ त्रिषष्टितमोऽध्यायः ।

### षट्पदीभक्षलक्षणचिकित्सितम् ।

आपाण्डुवर्णा कपिला हरिता च प्रजायते ।
महोदरा च षट्पादी सूक्ष्मवक्त्रोत्तमाङ्गिका ॥ १ ॥
षट्पदी नाम विख्याता तथा चाञ्जलिकारिका ।
गङ्गापतङ्गसंज्ञा च भाषिता सा दुरासदा ॥ २ ॥
ग्रासमध्यगतं वाहा ये भक्षन्ति सुदारुणम् ।
तेषां शोथश्च मूर्च्छा च भ्रमः श्वासश्च जायते ॥ ३ ॥
तेषु गव्यं घृतं पाने अभ्यङ्गश्च प्रशस्यते ।
सर्पदष्टचिकित्सायां कीर्त्तितं यच्च भेषजम् ॥ ४ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे षट्पदीभक्षचिकित्सिते त्रिषष्टितमोऽध्यायः ।

---

# अथ चतुःषष्टितमोऽध्यायः ।

## साध्यासाध्यविवेकः ।

अत ऊर्द्ध्वं प्रवक्ष्यामि साध्यासाध्यविनिश्चयम् ।
एकः प्रशाम्यते व्याधिः पुनरन्यः प्रकुप्यति ।
पुनरन्यः पुनश्चान्यो यस्य तं परिवर्जयेत् ॥ १ ॥
व्याधिनाक्रान्तस्य वाहस्य प्रकृतिं याति स उच्यते ॥ २ ॥
किञ्चित्साध्यं तथासाध्यं लक्षणं च प्रकाशते ।
कृच्छ्रसाध्यः स विज्ञेयो याप्यो वाथ हयो भवेत् ॥ ३ ॥
शुष्यते नेष्टगन्धश्च सोऽप्यसाध्यः प्रकीर्त्तितः ॥ ४ ॥
सप्ताहात् क्रियमाणेऽपि भेषजे यस्य वाजिनः ।
विशेषो न भवेत्तस्य चिकित्सां न प्रयोजयेत् ॥ ५ ॥
दीप्ताग्नेस्तु प्रयोक्तव्या क्रिया हीनाग्नये तु न ।
निश्चेष्टोऽनिमिषाक्षश्च वालैर्वा यो न वीज्यते ॥ ६ ॥
लभते ताड़नं दाहं कूपैश्च परिवर्जयेत् ।
तनुः स्तब्धा श्लथा वापि जिह्वा चैव तथाविधा ॥ ७ ॥
स्थूलो वा यो निराहार आहारैर्वा न पुष्यति ।
पूर्वाङ्गं शूयते वामं दक्षिणं यस्य पश्चिमम् ॥ ८ ॥
सदाहगुरु एकाङ्गं शूयते यस्य वा हरेः ।
शीतं गुदञ्च नासास्यं शीतोच्छ्वासी च यो हयः ॥ ९ ॥
शूलाध्माना निमिषाक्षः कृच्छ्रगामी च जायते ।
कृच्छ्रञ्च कम्पते श्वासाध्मातश्च शूनमेहनः ॥ १० ॥
श्लेष्मा न पिच्छिलः सान्द्रः फेनिलः पाण्डुरस्तथा ।
गलशुण्डा गले यस्य शोफो वा कठिनो भृशम् ॥ ११ ॥
रुद्धो गलग्रहो वापि मन्या वापि सुदूषिता ।
श्लेष्मा विविधवर्णश्च सान्द्रोऽतिपूतिगन्धवान् ॥ १२ ॥

स्वयजः काश्यतो वापि हरिर्यस्य प्रवर्त्तते।
अतिसारेण क्षीणस्य यस्य शोथः प्रजायते॥ १३॥
पश्चात्तु मूत्ररोगश्च जायतेऽश्वस्य दारुणः।
न संवृणोति यो मेढ्रं वक्षःशोभाविवर्जितः॥ १४॥
गुर्वङ्गोऽतिशयं भूय आत्मानमभिवीक्षते।
भग्नग्रीवश्च यो वाहो व्रणैर्यश्च विशुष्यते॥ १५॥
विस्तीर्णा श्रोणिका यस्य श्वासः स्वेदश्च मूत्ररुक्।
बाह्वोरभ्यन्तरे यस्य द्रोणिका भिद्यतेऽपि च॥ १६॥
मण्डूकायाश्च कीर्णायां नित्यस्रावी तलो भवेत्।
खुरश्च यस्य वाहस्य खिन्नश्चैव प्रजायते॥ १७॥
सर्वे पूर्वोदिता ह्येते नैव साध्याः प्रकीर्त्तिताः।
तथापि जीवमानस्य कुर्य्याद्वैद्यः प्रतिक्रियाम्॥ १८॥
प्रदीप्ताग्निर्भवेद् यस्तु प्रसन्नं रूपमीक्षते।
बहुपानरतो वाजी साध्यरोगः स उच्यते॥ १९॥
कायेन धनुते यस्तु लीढ़तेऽतिशयं हरिः।
वड़वायां रतश्चैव सोऽपि साध्यः प्रकीर्त्तितः॥ २०॥
चक्षुषोः सुदीप्तिर्यस्य स्वेददोषी च यो हयः।
अर्दितेनैव ग्रस्तस्य शिरा यस्य च वेधिता॥ २१॥
यस्त्वसाध्यः स्मृतो वाहः स कश्चिन्नैव साध्यते।
कालेनोपेक्षिताः साध्या दुश्चिकित्स्याः प्रकीर्त्तिताः॥ २२॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे साध्यासाध्यविवेके
चतुःषष्टितमोऽध्यायः।

---

## अथ पञ्चषष्टितमोऽध्यायः ।

### वातादिप्रकृतिलक्षणानि ।

धूमवर्णः कृशो रूक्षः शिरालो वेगवान् हयः ।
ऊर्द्ध्ववर्त्तितजिह्वश्च वातप्रकृतिरुच्यते ॥ १ ॥
पित्तप्रकृतिकश्चापि कृशतीक्ष्णतनुत्वचः ।
नित्यं शीताभिलाषी च बह्वाशी पीतवर्णकः ॥ २ ॥
पित्तप्रकृतिकश्चापि भवेत् स्वेदश्च जायते ।
श्लेष्मसुसंहताङ्गश्च क्षुत्तृट्संहरणे क्षमः ॥ ३ ॥
सङ्कीर्णप्रकृतिश्चापि विद्यात् सङ्कीर्णलक्षणम् ।
प्रकृतिं सम्यगालोक्य भिषग्वातादिकामिमाम् ॥ ४ ॥
यथादोषं ततः कुर्य्याच्चिकित्सां शास्त्रसम्मताम् ।
वातश्लेष्म तथा पित्तं ज्ञात्वा कर्म प्रचक्रमेत् ॥ ५ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे प्रकृतिज्ञाने
पञ्चषष्टितमोऽध्यायः ।

---

## अथ षट्षष्टितमोऽध्यायः ।

### रसोनकल्पः ।

रसोनस्य प्रवक्ष्यामि कल्पं शास्त्रानुसारतः ।
सम्पूर्णरसवीर्य्योऽसौ मासे संगृह्य फाल्गुने ॥ १ ॥
गृहीत्वा स्थापयेत्तत्र यत्नस्थो नैव नश्यति ।
ततस्तस्य प्रयोगन्तु कुर्य्यान्मात्राप्रमाणतः ॥ २ ॥
मातुलुङ्गरसोपेतं मांसानां रसकेन च ।
रसं दद्याद्रसोनस्य अन्यैर्वाम्लैः समायुतम् ॥ ३ ॥

प्रथमे दिवसे देयं रसोनस्य पलद्वयम् ।
एकैकपलवृद्ध्या तु दद्याद् यावच्च विंशति ॥ ४ ॥
उत्तमाख्यस्य मात्रैषा मध्यमस्य चतुर्दश ।
जघन्यस्य पलान्यष्टौ मात्रैषा न विरोधिनी ॥ ५ ॥
हीनन्तु रसमात्रातो भागेनैकेन बुद्धिमान् ।
यवकल्केन संपुष्टं मांसयुक्तं प्रदापयेत् ॥ ६ ॥
प्रत्यहं दापयेत्तावद् यावन्मात्रा विवर्द्धते ।
मात्रावृद्धिं भिषग्युक्त्या दद्यादेकान्तरं ततः ॥ ७ ॥
रसोनस्य प्रयोगश्च हेमन्ते शिशिरे तथा ।
प्रावृट्काले वसन्ते च मध्यमः परिकीर्त्तितः ॥ ८ ॥
शरन्निदाघयोश्चापि नैव देयः कदाचन ।
प्रावृट्काले प्रदातव्यो जलपूर्णे महीतले ॥ ९ ॥
वातिकेषु विकारेषु तिलतैलेन योजितः ।
क्षीरसर्पिःसमायुक्तः पित्ते वै शर्करान्वितः ॥ १० ॥
कफे कटुकतैलेन कटुकैरवचूर्णितः ।
रसः प्रभाते दातव्यः सायं कल्कस्तु भोजने ॥ ११ ॥
पिण्डेनैव प्रदातव्यो रसोनस्तु विजानता ।
वायौ प्रधानः पित्ते तु विषमस्तु कफे समः ॥ १२ ॥
वातश्लेष्मणि वाते वा कफे वा पानमिष्यते ।
रसं दद्यात् प्रभाते तु स्तोकं वातं निवारयेत् ॥ १३ ॥
शौदकं मधुरं वापि दद्याद् ग्रासं ततो बुधः ।
शीतलं विमलं तोयं स्थानं वापि सुखानिलम् ॥ १४ ॥
कल्कप्रयोगे विहितो विधिरेष शरद्वितः ।
महागुणं स्मृतं पानं सकल्कञ्च मनीषिभिः ॥ १५ ॥
कल्कप्रयोगेऽल्पगुणं तथा चात्ययवर्जितम् ।
क्रियावसाने दातव्यं शालिषष्टिकपायसम् ॥ १६ ॥

त्रिरात्रं पञ्चरात्रं वा शर्करासर्पिषान्वितम् ।
पुराणः स तु विज्ञेयो नैव देयस्तु वाजिनाम् ॥ १७ ॥
विधिरेष समुद्दिष्टः पूर्वशास्त्रविशारदैः ।
द्विगुणश्चापि सप्ताहं तुरङ्गं नैव वाहयेत् ॥ १८ ॥
स्वादुशीतोपचारश्च तत्र यावत् प्रकीर्त्तितः ।
रसोने तु यदा खेदी श्वासवान् जायते हयः ॥ १९ ॥
व्यापद्युक्तः स विज्ञेयस्तस्य कुर्य्याद्भिषक् क्रियाम् ।
पित्तज्वरसमुद्दिष्टां क्रियां सर्वां प्रयोजयेत् ॥ २० ॥
रसोनव्यापदाघाते तुरङ्गं मतिमान् भिषक् ।
वातभुग्नास्थिगात्रेषु मारुताहतमूर्त्तिषु ॥ २१ ॥
वृद्धेषु च विशेषेण रसोनञ्च प्रदापयेत् ।
सप्ताहमेकं द्विगुणं त्रिगुणं वा यथाविधि ।
प्रयोगोऽस्य स्मृतः सम्यग् यथाशास्त्रं तपोधनैः ॥ २२ ॥
इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे रसोनकल्पे
षट्षष्टितमोऽध्यायः ।

---

## अथ सप्तषष्टितमोऽध्यायः ।

### गुग्गुलुकल्पः ।

स्निग्धः काञ्चनसङ्काशः पक्वजम्बुफलोपमः ।
शोभनो गुग्गुलुः प्रोक्तः सुगन्धिर्यश्च पिच्छिलः ॥ १ ॥
सुष्को दुर्गन्धिकश्चैव वर्णान्यत्वसमन्वितः ।
पुराणः स तु विज्ञेयो नैव देयस्तु वाजिनः ॥ २ ॥
विधिरस्य द्विधा प्रोक्तः पूर्वशास्त्रविशारदैः ।
एकः पाने प्रयोगेण द्वितीयो भोजनेन तु ॥ ३ ॥
अर्द्धप्रहरगे सूर्य्ये गुग्गुलुं दापयेद्भिषक् ।

अष्टभागावशिष्टेऽह्नि भोजने संप्रदापयेत् ॥ ४ ॥
दत्त्वा तु गुग्गुलुं पाने अनुपानं ततो बुधः।
न द्वितीये चतुर्थे वा गोक्षीरञ्च प्रदापयेत् ॥ ५ ॥
गुग्गुलुं पाययित्वा तु भोजयेत्तुरगं भिषक्।
विकाले भोजयेद् भक्त्या भोजनैरल्पमात्रकैः ॥ ६ ॥
शाल्यन्नं वातले दद्यात् मांसानां रसकैर्युतम्।
पित्ते मुद्गं ससर्पिश्च भोजयेन्मधुना ततः ॥ ७ ॥
पञ्चतिक्तजले स्विन्नान् कटुकैरवचूर्णितान्।
तथा मुद्गान् कुलत्थांश्च कफे विद्वान् प्रदापयेत् ॥ ८ ॥
पीतगुग्गुलुके वाहे क्षुधार्त्ते दापयेत्ततः।
प्रहरं प्रहरार्द्धं वा नैव घासं प्रदापयेत् ॥ ९ ॥
शृतं शीतं जलं पाने घासे दूर्वा प्रकीर्त्तिता।
मुनिभिः शालिहोत्राद्यैः शास्त्रमार्गानुसारतः ॥ १० ॥
व्याधितेषु तुरङ्गेषु पाने देयस्तु गुग्गुलुः।
स्वस्थानां वापि पुष्ट्यर्थं भोजने संप्रदापयेत् ॥ ११ ॥
त्रिषु दोषेषु दुष्टेषु रक्ते रिक्ते तथा व्रणे।
खञ्जे च दुर्बले वापि एकस्मिन्नेव वासरे ॥ १२ ॥
प्रथमेऽह्नि पलं दद्यात् प्रतिकर्षं प्रवर्द्धते।
पलानां पञ्चकं देयमेकस्मिन्नेव वासरे ॥ १३ ॥
उत्तमस्य तुरङ्गस्य मध्यमस्य चतुष्टयम्।
पलानि त्रीणि देयानि जघन्यस्य तथा विधिः ॥ १४ ॥
अस्मात् प्रमाणादधिको नैव देयः कदाचन।
पानादूर्द्ध्वं न दातव्यो भोजने वापि गुग्गुलुः ॥ १५ ॥
पलान्यशीतिः प्रवरः प्रायोऽश्वस्य प्रकीर्त्तितः।
षष्टिर्मध्यः समुद्दिष्टश्चत्वारिंशतिरन्यतः ॥ १६ ॥
व्रणे कुष्ठेषु खञ्जेषु त्रिफलाक्काथसंयुतः।

मन्दाग्नौ शोथरोगे च गवां मूत्रेण योजितः ॥ १७ ॥
वातपित्तोल्वणे व्याधौ गोक्षीरघृतसंयुतः ।
देयः कृशानां पुष्ट्यर्थं मांसैर्युक्तश्च भोजने ॥ १८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे गुग्गुलुकल्पे सप्तषष्टितमोऽध्यायः ।

---

## अथ अष्टषष्टितमोऽध्यायः ।

### रसायनकल्पः ।

प्रकृष्टाय प्रदातव्यं गुडूच्याः पलपञ्चकम् ।
प्रभाते घृतसंयुक्तं शरद्ग्रीष्मेषु वाजिनम् ॥ १ ॥
रोगघ्नं पुष्टिदं वापि बलतेजोविवर्द्धनम् ।
तमेव मतिमान् दद्यात् क्षीरयुक्तमथापि वा ॥ २ ॥
गुडूचीकल्कयोगेन शतावर्य्यश्वगन्धयोः ।
मूलकल्कः प्रदातव्यः कुक्कुट्याश्च विशेषतः ॥ ३ ॥
पलानि पञ्च वाहस्य उत्तमस्य प्रदापयेत् ।
मध्यमं पलचत्वारि अधमस्य पलत्रयम् ॥ ४ ॥
औषधी न च दातव्या एषां श्लेष्मान्विते हये ।
वातिके पैत्तिके वापि विहिता शास्त्रवेदिभिः ॥ ५ ॥
हरीतक्यामलाकल्कः प्रावृट्काले विधौ स्मृतः ।
तेनात्र नो विनिर्दिष्टः पुनरुक्ताभिशङ्कया ॥ ६ ॥
एवं विरिक्तं शुद्धाङ्गं कृत्वा यत्नेन वाजिनम् ।
दद्याद् गोमूत्रसंयुक्तां सतैलाञ्च हरीतकीम् ।
नित्यं त्रिसप्तकं यावत् पलपञ्चप्रमाणतः ॥ ७ ॥
सौवर्चलं तथा हिङ्गु पुष्करं विड़दाड़िमम् ।
ग्रन्थिकं मेथिकाश्चैषां भिषक् पिण्डञ्च कारयेत् ॥ ८ ॥

रक्तपित्तं ज्वरं हन्ति कासं श्वासं तथा घृणिम्।
विद्रधिं क्षयरोगञ्च नाशयेद्वाजिनां ध्रुवम्॥ ९॥
श्रीशालिहोत्रादिमुनिप्रणीतं दृष्ट्वाश्वशास्त्रं बहुविस्तरञ्च।
स्वल्पप्रबोधं सफलं यथार्थं कृतञ्च तद्वै जयदत्तकेन॥ १०॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे रसायनकल्पे अष्टषष्टितमोऽध्यायः।

इति श्रीमहासामन्तजयदत्तकृताश्ववैद्यकशास्त्रं समाप्तम्।

---

# अपूर्वचिकित्सितम् ।



## प्रथमोऽध्यायः ।

येन ज्ञानवता हिमालयतरुच्छायासु विक्रीडितम् ।
यः स्नातो हिमपुष्पवातशिशिरे गङ्गाजले पावने ॥
रेमे यस्तु तुरङ्गयूथजनितैर्नानाविधैर्हेषितैः ।
पायाद्वः स तुरङ्गघोषतनयः श्रीशालिहोत्रो मुनिः ॥ १ ॥
जयति च पाण्डवनाथो धर्मसनाथो युधिष्ठिरो नृपतिः ।
भीमार्जुनसहदेवास्तदनु च ये वाजिशास्त्रतत्त्वज्ञाः ॥ २ ॥
दृष्ट्वा सम्यङ्नकुलः शास्त्रं कृत्स्नं च शालिहोत्रीयम् ।
ब्रूते शास्त्रार्थमन्यच्छास्त्रं कृत्वा समासेन ॥ ३ ॥
प्रश्नो जातिवर्णमावर्त्तदन्ता लक्षं वेगा वाहनं धातुरस्रम् ।
कालो नस्यं पिण्डमाज्यं कषायं शालां चेष्टां वाजिनामत्र वक्ष्ये॥४
सपक्षा वाजिनः सर्वे सञ्जाता व्योमचारिणः ।
गन्धर्वेभ्यो यथाकामं गच्छन्ति च समन्ततः ॥ ५ ॥
तान् दृष्ट्वा जवसम्पन्नानसह्यान् वाहनोचितान् ।
शक्रः प्रोवाच पार्श्वस्थं शालिहोत्रं मुनीश्वरम् ॥ ६ ॥
नास्त्यसाध्यं मुने ! किञ्चिद्भवतो भुवनत्रये ।
तस्मादाशु कुरुष्व त्वं वाहनार्हान् हयोत्तमान् ॥ ७ ॥
ये च मे युद्धकालेषु प्रवहन्ति रथं सदा ।
अशक्यं वारणेन्द्रैश्च दानवैर्बलवत्तरैः ॥ ८ ॥
ईषिकास्त्रं समुत्सृज्य पक्षच्छेदं व्यधात्तदा ।
वाजिनां शक्रवाक्येन शालिहोत्रो महामुनिः ॥ ९ ॥

छिन्नपक्षास्तु ते सर्वे गत्वा तमृषिमब्रुवन्।
दीनाः सुदुःखसम्पन्ना रुधिरेण परिप्लुताः॥ १०॥
भगवन्! किं निमित्तं नः पक्षच्छेदः कृतस्त्वया।
अपराधविहीनानां नेष्टमिच्छन्ति पण्डिताः॥ ११॥
तस्माद्गतिर्भव प्राज्ञ! सर्वेषामिह वाजिनाम्।
यथा स्यात् सर्वदा सौख्यं पुष्टिश्च मुनिपुङ्गव!॥ १२॥
अथासौ कृपयाविष्टस्तानुवाच सुदुःखितान्।
इन्द्रादेशात् कृतं सर्वं भवतां पक्षपातनम्॥ १३॥
तस्माद्वः प्रकरिष्यामि भविष्यति यथा सुखम्।
पुष्टीरम्या यथा देहे गौरवं च जगत्त्रये॥ १४॥
यूयं शक्रादिदेवानां वाहनत्वं करिष्यथ।
तथा भूमिपतीनाञ्च गौरवेण समन्विताः॥ १५॥
यो राजा भवतां पुष्टिं खन्नपानादिभिः सदा।
करिष्यति न सन्देहो भविष्यति स दुर्जयः॥ १६॥
न च त्यक्ष्यति तं लक्ष्मीः कदाचिज्जयलक्षणा।
अपि सर्वैर्गुणैर्हीनं बहुशत्रुभिरावृतम्॥ १७॥
तथाचैव विधास्यामि परमञ्च चिकित्सितम्।
पुष्ट्यै च रोगनाशार्थं नराणां विहितं यथा॥ १८॥
तस्माद्गच्छत भूलोकं पातालञ्च तथापरे।
स्वर्गं चान्ये मदादेशाद्येन शान्तिर्भवेद् ध्रुवम्॥ १९॥
एवं विसृज्य तान् सर्वान् शालिहोत्रस्तुरङ्गमान्।
चक्रे द्वादशसाहस्रीं तदर्थं संहितां सुधीः॥ २०॥
ततःप्रभृति लोकेऽस्मिन् वाह्या जातास्तुरङ्गमाः।
ततश्चिकित्सितं तेषां शालिहोत्रप्रभाषितम्॥ २१॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते प्रश्नो नाम प्रथमोऽध्यायः।

# द्वितीयोऽध्यायः ।

## जाति ।

उत्तमा मध्यमा नीचाः कनीयांसस्तथापरे ।
चतुर्धा वाजिनो भूमौ जायन्ते देशसंश्रयात् ॥ १ ॥
ताजिकाः खुरशाणाश्च उत्तराश्चोत्तमा हयाः ।
गोजिकाणाश्च केकाणाः प्रौढ़ाहाराश्च मध्यमाः ॥ २ ॥
भाण्डजाश्चोत्तमांसाश्च राजशूलाश्च मध्यमाः ।
गोह्वराः शावराश्चैव सिन्धुपाराः कनीयसः ॥ ३ ॥
अन्यदेशोद्भवा ये च नीचनीचाश्च ते स्मृताः ।
वाजिनो जलजाः केचिद्दह्निजातास्तथापरे ॥ ४ ॥
समीरप्रभवाश्चान्ये उलूकमृगजास्तथा ।
जलोद्भवा द्विजातीयाः चत्रिया वह्निसम्भवाः ॥ ५ ॥
समीरप्रभवा वैश्या एणोलूकाश्च शूद्रजाः ।
विवेकी सद्गुणो विप्रस्तेजस्वी चत्रियो बली ॥ ६ ॥
दुष्टभावस्तथा वैश्यः शूद्रो निःसत्वकातरः ।
ब्राह्मणः सामवाही च भेदवाही च चत्रियः ॥ ७ ॥
उपादानेन वैश्यः स्याच्छूद्रो दण्डेन ताड़ितः ।
पुष्पगन्धः सदा विप्रः चत्रियोऽगुरुगन्धकः ॥ ८ ॥
घृतगन्धः सदा वैश्यो मीनामोदी च शूद्रकः ।
विप्राह्वो वाजिनः सर्वे चत्रियो भूपतेः सदा ॥ ९ ॥
द्वौ वैश्यस्याथ शूद्रस्य शूद्र एव सुखावहः ।
केचिदिच्छन्ति भूपानां सर्वेऽश्वा वाहनोचिताः ॥ १० ॥
तदर्थं भूतले यस्माच्छालिहोत्रेण निर्मिताः ।
ब्राह्मणाः चेमकृत्येषु सिद्धिं गच्छन्ति वाजिनः ॥ ११ ॥

क्षत्रिया युद्धकार्य्येषु वैश्या वित्तार्जने सदा।
शूद्राश्चान्येषु कृत्येषु ज्ञात्वैवं वाजिनः सदा॥ १२॥
आरोहेत् सर्वकार्य्येषु यदीच्छेच्छाश्वतीं श्रियम्।
सदा शुभा भवन्त्येते वाजिनो यस्य भूतले॥ १३॥
सदैव निद्रावशगा निद्राच्छेदस्य सम्भवः।
जायते सङ्करे प्राप्ते कर्करस्य च भक्षणे॥ १४॥
प्रबुद्धाः कथयन्त्यश्वाः शुभं वा यदि वाशुभम्।
स्वस्वामिनो निजैश्चिह्नैस्तद्विज्ञेयं विचक्षणैः॥ १५॥
यः सन्नद्धो हयो रात्रमूर्ध्वमूर्ध्वं करोति च।
खुराग्रेण लिखन् भूमिं स शंसति रणे जयम्॥ १६॥
यः करोत्यसकृन् मूत्रं पुरीषञ्चाश्रुमोक्षणम्।
स शंसति पराभूतिं यश्चैवं वर्त्तते हयः॥ १७॥
निरामिषं निशीथे यो जागर्त्ति नृपतेर्हयः।
स शंसति द्रुतन्तस्य स्थिरस्यापि प्रयाणकम्॥ १८॥
यदा व्याधिं विना वाजी ग्रासन्त्यजति दुर्मनाः।
अश्रुपातञ्च कुरुते तदा भर्त्तुरशोभनम्॥ १९॥
पुलकाङ्कितपुच्छा ये जायन्ते भूपतेर्हयाः।
निरीक्षन्तः प्रभोर्नाशं ते वदन्ति निशागमे॥ २०॥
शरटं रक्षयेद्यत्नात् प्रविशन्तं हयालये।
यदीच्छेच्छाश्वतीं वृद्धिं तेषाञ्चैव तथात्मनः॥ २१॥
स्फुलिङ्गा यस्य दृश्यन्ते पुच्छदेशे च वह्निजाः।
परचक्रागमाशंसी विज्ञेयो हयपण्डितैः॥ २२॥
अश्वशालां समासाद्य यदान्तर्मधुमक्षिकाः।
मधुजालं प्रकुर्वन्ति तदाश्वान् घ्नन्ति कृत्स्नशः॥ २३॥
तस्मात् सर्वप्रयत्नेन वाजिशालां प्ररक्षयेत्।
उपायेभ्यश्च सर्वेभ्यो य इच्छेद्गतिमात्मनः॥ २४॥

ब्राह्मणान् वाचयेत् स्वस्ति नित्यं वेदविचक्षणान्।
तिलहोमस्तथा कार्य्यो जपश्च शतरुद्रियः॥ २५॥
मन्दुरान्ते सदा धार्य्यो रक्तवक्त्रो महाकपिः।
सर्व्वपापविनाशाय वाजिनाञ्च विवृद्धये॥ २६॥
शरवां रक्षयेद् यत्नात् प्रविशन्तीं हयालये।
यदीच्छेच्छाश्वतीमृद्धिं तेषाञ्चैव तथात्मनः॥ २७॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते जात्यधिकारे
द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

### वर्णवर्णनम्।

वर्णाः सप्त भवन्तीह सर्व्वेषां वाजिनां ध्रुवम्।
तानहं कीर्त्तयिष्यामि भेदैर्जाताननेकधा॥ १॥
सितो रक्तस्तथा पीतः सारङ्गः पिङ्ग एव च।
नीलः कृष्णोऽथ सर्व्वेषां श्वेतः श्रेष्ठतमः स्मृतः॥ २॥
पट्टार्हो भूपतेर्वाजी सर्व्वश्वेतः प्रशस्यते।
तदभावे यथा प्रोक्तास्तथा श्रेष्ठाः क्रमेण च॥ ३॥
श्वेतः प्रालेयसङ्काशो रक्तः कुङ्कुमसन्निभः।
हरिद्रासदृशः पीतः सारङ्गः कर्व्वुरः स्मृतः॥ ४॥
पिङ्गः कपिलकाकारो नीलो दूर्व्वाग्रसन्निभः।
कृष्णो जम्बूफलाकारः शास्त्रज्ञैः समुदाहृतः॥ ५॥
पीताभः श्वेतपादो यस्तथा स्यात्सितलोचनः।
चक्रवाकः स विज्ञेयो राजार्हो वाजिसत्तमः॥ ६॥

सर्वश्वेतो हयो यस्तु भवेन्मेचककर्णकः ।
स वाजी वाजिमेधार्हः श्यामकर्णः प्रकीर्त्तितः ॥ ७ ॥
मुखे चन्द्रकसंवीतो जम्बूफलसमाकृतिः ।
श्वेतपादः स विज्ञेयो मल्लिकाख्यः स पूजितः ॥ ८ ॥
चत्वारोऽप्यसिताः पादाः सर्वश्वेतस्य वाजिनः ।
भवन्ति यस्य स त्याज्यो यमदूतः सुदूरतः ॥ ६ ॥
यस्य पादाः सिताः सर्वे पुच्छं वक्षो मुखं तथा ।
मूर्द्धजाश्च सिता यस्य तं विद्यादष्टमङ्गलम् ॥ १० ॥
भस्माभं वाजिनं जह्यात् सुदूरेण नराधिपः ।
यदि वाञ्छति कल्याणं वाञ्छेच्च श्रीसमुद्भवम् ॥ ११ ॥
यस्य रोमविभेदेन जायन्ते रोमविन्दवः ।
पुष्पाख्यः स परित्याज्यः सर्ववाजिभयावहः ॥ १२ ॥
यस्य पादाः सिता सर्वे तथा वक्त्रञ्च मध्यतः ।
कल्याणपञ्चकः प्रोक्तः सर्वकल्याणकृच्च सः ॥ १३ ॥
विमिश्रवर्णकाः सर्वे प्रशस्ता वाजिनः स्मृताः ।
कृष्णनीलस्य मिश्रत्वमेकं मुक्त्वा सुदूरतः ॥ १४ ॥
यस्योत्कृष्टतरो वर्णो वृद्धिं याति शनैः शनैः ।
नाशयति तथा नीचान् स करोति बहून् हयान् ॥ १५ ॥
यस्याधमेन वर्णेन छाद्यते च प्रधानजः ।
विवृद्धिं गच्छता सोऽथ करोति हयसंक्षयम् ॥ १६ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते वर्णो नाम
तृतीयोऽध्यायः ।



# चतुर्थोऽध्यायः ।

## आवर्त्ताः ।

आवर्त्ता विंशतिः प्रोक्ताः शालिहोत्रमहात्मना ।
गात्रस्थानविभागेन तेषां व्यक्तिर्मयोच्यते ॥ १ ॥
ललाटे मस्तके चैव ग्रीवायां हृदये तथा ।
पादे पृष्ठे मणीबन्धे नाभिदेशे विशेषतः ॥ २ ॥
स्कन्धे पार्श्वे गले वक्त्रे कुक्षौ रन्ध्रे त्रिके तथा ।
आद्यास्त्रयोदशावर्त्ता विज्ञेया वाजिपण्डितैः ॥ ३ ॥
नासिकाग्रे ललाटाग्रे शङ्खे कण्ठे च मस्तके ।
आवर्त्तो जायते येषां ते धन्यास्तुरगोत्तमाः ॥ ४ ॥
हृदि स्कन्धे गले चैव कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वाङ्गे मध्यमास्ते प्रकीर्त्तिताः ॥ ५ ॥
ललाटे यस्य चावर्त्तौ द्वितीयस्य स लिङ्गकः ।
मस्तके च तृतीयश्च पूर्णकुक्षिः स उत्तमः ॥ ६ ॥
पृष्ठवंशे तथावर्त्तो यस्यैकः संप्रजायते ।
स करोत्यश्वसङ्घातान् स्वामिनः सूर्य्यसंज्ञकः ॥ ७ ॥
कक्षायां जानुमेढ्रे च त्रिवलौ पुच्छसन्निधौ ।
पुच्छे गुह्ये बलावष्टावावर्त्ता अधमा हये ॥ ८ ॥
त्रयो यस्य ललाटस्था आवर्त्ता अधरोत्तराः ।
त्रिकूटः स परिज्ञेयो वाजिवृद्धिकरः परः ॥ ९ ॥
एवमेव प्रकारेण त्रयो ग्रीवां समाश्रिताः ।
त्रयावर्त्तः स वाजीशो जायते भूपमन्दिरे ॥ १० ॥
ललाटे युगलावर्त्तौ चन्द्रार्कौ संप्रकीर्त्तितौ ।
वाजिनो यदि तौ स्यातां राष्ट्रवृद्धिकरौ परौ ॥ ११ ॥
उपर्य्युपरि यस्य स्युरावर्त्ता अलिके त्रयः ।

निःश्रेणिः स तु विज्ञेयो राष्ट्रवृद्धिकरः परः॥ १२॥
एकोऽथवा कपोलस्थो यस्यावर्त्तः प्रदृश्यते।
वर्त्तमानः स विज्ञेयः स इच्छेत् स्वामिनाशनम्॥ १३॥
कपोलाभ्यां तथावर्त्तौ विद्येते वाजिनो यदि।
तावश्विनाविति प्रोक्तौ युद्धकाले जयप्रदौ॥ १४॥
गण्डावर्त्तो भवेद्यस्य वाजिनो दक्षिणाश्रयः।
स करोति महासौख्यं स्वामिनः शिवसंज्ञकः॥ १५॥
तद्वद्वामाश्रयः क्रूरः प्रकरोति धनक्षयम्।
इन्द्रकाख्यावुभौ शस्तौ नृपराज्यविवृद्धिदौ॥ १६॥
कर्णमूले यदावर्त्तस्तन्मध्ये च तथापरः।
विजयाख्यावुभौ ज्ञेयौ युद्धकाले जयप्रदौ॥ १७॥
नासामध्ये यदावर्त्त एको वा यदि वा त्रयः।
चक्रवर्त्ती स विज्ञेयो वाजी भूपालपूजितः॥ १८॥
कण्ठे यस्य महावर्त्त एकोऽश्वस्य प्रजायते।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवृद्धिदः॥ १९॥
स्कन्धे पार्श्वे यदावर्त्तः स भवेत् पद्मलक्षणः।
करोति विधिवत् पद्मे स्वामिनः सततं सुखम्॥ २०॥
शुक्त्याख्यौ तालुकान्तस्थावावर्त्तौ कीर्त्तिवृद्धिदौ।
हयस्य स्वामियुक्तस्य सदैव सुसुखावहौ॥ २१॥
एकावर्त्तो भवेद्यस्य कक्षान्ते वाजिनो यदा।
स रणे मृत्युमाप्नोति द्वौ च स्वामिविनाशनौ॥ २२॥
जानुदेशे यदावर्त्तो वाजिनः संप्रदृश्यते।
प्रवासं सततं ब्रूते स्वभर्त्तुः क्लेशसंयुतम्॥ २३॥
वाजी मेढ्रतलावर्त्तो वर्जनीयो महीभुजाम्।
स करोति हरेर्नाशं परचारसमुद्भवम्॥ २४॥
त्रिवलिस्थो यदावर्त्तस्त्रिवर्गस्य प्रणाशकः।

वाजिनस्ते परिज्ञेया: स्त्रीपार्श्वस्था भयप्रदा: ॥ २५ ॥
पुच्छदेशे यदावर्त्तो वाजिन: संप्रदृश्यते ।
धूमकेतुरिति ख्यात: स त्याज्यो दूरतो नृपै: ॥ २६ ॥
गुह्ये पुच्छे बलौ यस्य भवन्त्यावर्त्तकास्त्रय: ।
स कृतान्तस्वरूपेण वर्जनीयस्तुरङ्गम: ॥ २७ ॥
अथ ऊर्द्धं यदा वाजी सम्पुटं न स्पृशेत् क्वचित् ।
यमदूत: स विज्ञेयो वर्जनीय: प्रयत्नत: ॥ २८ ॥
हीनदन्तोऽधिदन्तश्च करालो कृष्णतालुक: ।
मुशली च तथा शृङ्गी षड़ेते स्वामिघातका: ॥ २९ ॥
एकाण्डजातश्चैकाण्डो हीनाङ्गोऽप्यधिकाङ्गक: ।
परित्याज्य: स वाञ्छद्भिरन्विष्य परमं यश: ॥ ३० ॥
घरटी वदनको वाली शृङ्गी चैव चतुर्थक: ।
वर्जनीय: प्रयत्नेन सर्वे ते पापकृत्तमा: ॥ ३१ ॥
घरटी च स्वामिनं हन्ति वदनो धनसंचयम् ।
अन्त:पुरं तथा वाली शृङ्गी राष्ट्रविनाशन: ॥ ३२ ॥
षट्पदाभो भवेद्यश्च कृष्णतालुर्न दुष्यति ।
शङ्खपादमुखो यस्तु आवर्त्तै: कुत्सितैरपि ।
न दुष्यति सदावर्त्त: शालिहोत्रमतं यथा ॥ ३३ ॥

इति श्रीनकुलविरचितेऽश्वचिकित्सिते
आवर्त्ताऽध्यायश्चतुर्थ: ।

---

## पञ्चमोऽध्यायः ।

### दन्ताः ।

दन्तोद्भेदं प्रवक्ष्यामि वाजिनामायुलक्षणम् ।
येन विज्ञातमात्रेण आयुर्ज्ञानं प्रचक्षते ॥ १ ॥
अश्वस्तु तनुभिर्दन्तैः क्षीरदन्त इति स्मृतः ।
तथा षोड़शभिः कोणो प्राप्तैर्दादशमासिकः ॥ २ ॥
त्रिंशन्मासोद्भवाः सर्वे अश्वखण्डाः परिकीर्त्तिताः ।
द्वौ स्यातां द्वौ च न स्यातां मूर्द्धोपरि यथाक्रमम् ॥ ३ ॥
चतुर्भिर्वत्सरैर्दन्ताः कालिकान्ये भवन्ति च ।
तथान्यः सप्तमे वर्षे चतुर्थः कालिको भवेत् ॥ ४ ॥
अष्टमे वत्सरे प्राप्ते प्राप्ताः स्युः सार्वकालिकाः ।
नवमे त्वथवा रेखा पीतत्वं शंसयन्ति च ॥ ५ ॥
तथाप्येकादशे वर्षे तावत् पीतत्वमागताः ।
तिष्ठन्ति दशनास्तेषां वाजिनामप्यसंशयम् ॥ ६ ॥
ततः श्वेता प्रदृश्यन्ते यावद्वर्षत्रयं पुनः ।
ततः काचप्रभाः सम्यक् यावत् संवत्सरास्त्रयः ॥ ७ ॥
ततः सप्तदशादूर्द्ध्वं यावद्वर्षाणि विंशतिः ।
मक्षिकाभा रदास्तेषां यावद्वर्षत्रयं पुनः ॥ ८ ॥
तस्मादुदूखलं प्राप्तास्तावद्वर्षत्रयं पुनः ।
प्रकम्पश्च समागम्य पश्चात् पातः समात्रयम् ॥ ९ ॥
द्वात्रिंशद्वत्सरैरेव वाजी निर्वाणमाप्नुयात् ।
दंष्ट्राचतुष्टयं श्वेतं वक्त्रेण परमायुषि ॥ १० ॥
अश्वानामेव सर्वेषां दन्ता द्वादश कीर्त्तिताः ।
कालिका हारिणी शुक्ला काचा वाप्यथ मक्षिका ॥ ११ ॥
शङ्खोदूखलकश्चैव दन्तानाश्चलनं तथा ।

ततस्तु पतनं विद्यादेष व्यञ्जनसंग्रहः॥ १२॥
चतुर्विंशतयो दंष्ट्राः शालिहोत्रमतं तथा।
एवं दन्तविशेषेण सर्वेषामिह वाजिनाम्।
विज्ञेया चायुषः सङ्ख्या वाजिपोषणतत्परैः॥ १३॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते दन्तोद्भेदो नाम पञ्चमोऽध्यायः।

---

## षष्ठोऽध्यायः।

### अवयवप्रमाणम्।

दीर्घसूक्ष्मविमांसास्या ये भवन्ति तुरङ्गमाः।
ते शस्ताः पार्थिवेन्द्रस्य यानवाहनकर्मणि॥ १॥
स्कन्धमभ्युन्नतं दीर्घं वक्रग्रीवं विशेषतः।
चमरालङ्कृतं सम्यक् स्तोकवालसमन्वितम्॥ २॥
येषां पृष्ठं सुवंशं स्याद्विपुलं व्रणवर्जितम्।
किञ्चिन्मध्ये भवेन्निम्नं राजार्हास्ते तुरङ्गमाः॥ ३॥
स्निग्धरोमा सुवृत्ता च सुस्थूला विपुला कटी।
ग्रथिताः सुदृढ़ा रम्या भुजा मांसप्रपूरिताः॥ ४॥
पादा निर्मांसला वक्राश्चक्राकारखुरान्विताः।
अप्रमाणं तथा वक्षः कर्णौ लघुतरौ स्मृतौ॥ ५॥
पार्श्वौ तनुतरौ शस्तौ सुरसस्निग्धतालुकम्।
दन्ताश्च शिखराकारा विपुला चन्द्रवर्चसः॥ ६॥
सप्तविंशप्रमाणेन मुखमश्वस्य शस्यते।
कर्णौ षडङ्गुलौ प्रोक्तौ तालुकं चतुरङ्गुलम्॥ ७॥

चत्वारिंशच्च सप्ताद्याः स्कन्धाः सम्यक् प्रकीर्त्तिताः।
पृष्ठवंशश्चतुर्विंशः सप्तविंशा तथा कटी॥ ८॥
अतिसूक्ष्मं तथा निम्नं पुच्छं हस्तद्वयायतम्।
लिङ्गं हस्तप्रमाणञ्च तथाण्डौ चतुरङ्गुलौ॥ ९॥
मार्गस्थानं चतुर्विंशं हृदयं षोड़शाङ्गुलम्।
कटिकक्षान्तरञ्चोक्तं चत्वारिंशत् प्रमाणतः॥ १०॥
मणिबन्धद्वयं चैव खुराश्च चतुरङ्गुला।
अशीत्यङ्गुल उत्सेधो दैर्घ्यञ्च द्व्यधिकं शतम्।
एवं क्रमेण गात्रस्य प्रमाणं वाजिनां मतम्॥ ११॥
दीर्घाणि चत्वारि तथोन्नतानि चत्वारि रक्तानि च सूक्ष्मकाणि।
ह्रस्वानि चत्वार्य्यथ चायतानि भूयश्च चत्वार्य्यथ नम्रकाणि॥१२॥
द्वात्रिंशत् क्रमशोऽप्याहुर्लक्षणानि मुनीश्वराः।
तान्यहं कीर्त्तयिष्यामि वाजिनाञ्च पृथक् पृथक्॥ १३॥
आस्यं भुजौ केशककाटिकाश्च दीर्घं चतुष्कं तुरगस्य शस्तम्।
तथोन्नते घ्राणपुटे ललाटे शफाश्च तज्ज्ञाश्चरणौ वदन्ति॥१४॥
ओष्ठौ च जिह्वाप्यथ तालुकञ्च मेढ्रं सुरक्तं शुभदं हयस्य।
लघूनिबन्धाश्चरणेषु कोष्ठं श्रोत्राणि सर्वाणि तथैव पुच्छम्॥१५
कर्णान्तरं कर्णसमन्वितञ्च वंशं तथा ह्रस्वतरं प्रशस्तम्।
वक्त्रं मुखं कन्धरजानुनी च पार्श्वञ्च सप्तैः शुभदं प्रदिष्टम्॥१६॥
कक्षान्तरं चोदरमध्यमञ्च निम्ना कटी तानि सजानुकानि।
वक्षःशफोरुजघनस्थलञ्च चतुष्कमेतत् पृथुलं प्रदिष्टम्॥ १७॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते सर्वावयव-
प्रमाणो नाम षष्ठोऽध्यायः।

---

# सप्तमोऽध्यायः ।

## वेगः ।

गुणानामिह सर्वेषां गुणो वेगमयोऽधिकः ।
अश्वानां शस्यते तज्ज्ञैरश्वज्ञानविचक्षणैः ॥ १ ॥
संवाहनविधानेन प्रकाशं यान्त्यसंशयम् ।
तस्मात् सर्वप्रयत्नेन वेगो ज्ञेयश्च वाजिनाम् ॥ २ ॥
अवाहिता विनश्यन्ति विनश्यन्त्यतिवाहिताः ।
अश्वानां वाहनं पथ्यं सानुरागश्च मोक्षणम् ॥ ३ ॥
अधमा मध्यमास्ते स्युर्मध्यमाश्च तथोत्तमाः ।
उत्तमाश्चोत्तमा भूयो वाह्यमाना स्तुरङ्गमाः ॥ ४ ॥
रूढ़मश्वविदां श्रेष्ठं रूढ़े सर्वं प्रतिष्ठितम् ।
रूढ़ेन तु विहीनस्य लक्षणं चाप्यलक्षणम् ॥ ५ ॥
रूपावर्त्तगतिच्छाया सत्ववर्णवयोबलम् ।
जवहीनस्य वाहस्य सर्वमेव निरर्थकम् ॥ ६ ॥
गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्वं सर्वं सत्वे प्रतिष्ठितम् ॥ ७ ॥
लघुत्वं मातृदोषेण पितृदोषेण जाड्यता ।
दौर्बल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनाम् ॥ ८ ॥

जवो हि सप्तेः प्रथमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य वेदोऽथ मुनेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनः ॥ ९ ॥

आकर्षन्निव गां वमन्निव खुरौ पश्चार्द्धमुद्यन्निव
स्वीकुर्वन्निव खं पिबन्निव दिशो वायुं समश्नन्निव ।
साङ्गारप्रकरान् स्पृशन्निव महीं छायाममर्षन्निव

चञ्चच्चामरवीज्यमानवदनः श्रीमान् हयो धावति ॥ १० ॥
अलक्षितगतागतैर्मृगदृशां कटाक्षैरिव
क्षणानुनयशीतलैः प्रलयकेलिकोपैरिव।
सुवृत्तमसृणोत्तरैर्मृगदृशामुरोजैरिव
त्वदीयतुरगैरलं धरणिचक्रमाक्रम्यते ॥ ११ ॥
येषां दीपशिखोपमानि नयनान्युद्भावितः सन्निव
ग्रीवा क्रौञ्चनिभा विभाति च समा पादाश्च मुद्गोपमाः।
वेगो वायुरिवाथ वानरसमः स्याद्वारणप्रेङ्खितम्
शङ्खक्रौञ्चमृगेन्द्रदुन्दुभिघनव्याघ्रेभतुल्यस्वनः ॥ १२ ॥
वक्त्रे यो हरिणाधिपप्रतिनिभो व्याघ्रोपमो बाहुभिः
आवर्त्तैऽश्वशुभैः प्रधानकुलजाः सुस्निग्धवर्णप्रभाः।
उष्ट्राक्षाः प्रियदर्शनाश्च सुभगाः श्वासैः सुगन्धैश्च ये
धन्यास्ते जयराज्यवित्तसुखदाः संवाहका भूपतेः ॥ १३ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते वेगवर्णनो नाम
सप्तमोऽध्यायः।

---

## अष्टमोऽध्यायः।

### आरोहणम्।

अथातः संप्रवक्ष्यामि हयारोहणमुत्तमम्।
येन विज्ञानमात्रेण रेवन्तेनोपमीयते ॥ १ ॥
चलकिसलयपादः कर्णमध्यैकदृष्टिः
न चलति कटिदेशे आसने संस्थितस्य।
हयहृदयगतिज्ञः स्यानदण्डावपाती
स खलु तुरगयोक्ता मान्यते पार्थिवेन्द्रैः ॥ २ ॥

यो नित्यं दृढमुष्टिहस्तलघुकः क्रोधानलैर्वर्जितः
सत्यैकस्थिरबुद्धिमध्यमतनुः शास्त्रस्य तत्त्वज्ञकः।
काले दण्डनिपातविश्रमयुतः ताम्बूलवल्लान्वितः
त्वेवं लक्षणसंयुतो हयरुहो राज्याधिपैः पूज्यते॥ ३॥

ऊरू स्थिरौ यस्य चलौ च पादौ
त्रिकोन्नतं संहतमासनञ्च।
स वाजिवाहः कथितः पृथिव्यां
शेषा नरा भारवहा हयानाम्॥ ४॥

प्राज्ञः सत्वबलोत्साही दृढः सर्वाङ्गसौष्ठवः।
जितशीतातपालस्यो जितायासो जितासनः॥ ५॥
हयकालबलप्राणजवकामाध्वयोगवित्।
शान्तोपचारसारज्ञो रणक्रीड़ासु दीक्षितः॥ ६॥
वाजिनां हृदयज्ञस्य स्थाने दण्डनिपातवित्।
दुष्टाश्वदमने दक्षः सर्वक्लेशसहः शुचिः॥ ७॥
ग्रासौषधान्नपानीये परव्यूहावलोकने।
त्रिषु श्रेष्ठः प्रवेशे च निर्गमे कुशलोऽस्त्रवित्॥ ८॥
रोगं विकुरुते यस्य हत्वा वाधाविचारवित्।
धनुःकुन्तासिशक्तिज्ञः सोऽश्ववाहः प्रकीर्त्तितः॥ ९॥
वक्त्रे स्कन्धे मुखे कोष्ठे गात्रे सक्थौ च ताड़येत्।
उन्मार्गो यदि भ्रष्टोऽश्वो मूढ़ः स्खलति क्रेषते॥ १०।
कुपिते पुच्छसंस्थाने भ्रान्ते जानुद्वयं तथा।
सर्वथा प्राप्तदण्डस्य दण्डमेकं निपातयेत्॥ ११॥
क्रेषणे स्कन्धमुद्दिष्टं स्खलिते जघनान्तरम्।
भीते वक्षःस्थलं हन्याद्वक्त्रञ्चोन्मार्गगामिनम्॥ १२॥
अस्थाने ताड़ितो वाजी बहून् दोषान् प्रदर्शयेत्।
तावद्भवन्ति ते दोषा यावज्जीवत्यसौ हयः॥ १३॥

दण्डेनाभिभवेद्दाह्यारोहेद्दण्डवर्जितान् ।
दण्डो हि साधनं तीव्रं पदं दण्डात् प्रजायते ॥ १४ ॥
तुलावदुद्धृता वल्गा नात्युच्चा नातिलम्बिता ।
दोषं दृष्ट्वा तु कर्त्तव्या तिर्य्यगाकुञ्चिता श्लथा ॥ १५ ॥
कटिं समेत्य शैथिल्याद्वहमानस्य ताड़येत् ।
सद्यः प्रस्खलिते गात्रं तत्र दण्डं प्रदापयेत् ॥ १६ ॥
अकालदंण्डपाताच्च त्वकालग्रहमोचणात् ।
अकालहिंसाघाताच्च तेन वाजी न धावति ॥ १७ ॥
आसनं शिथिलं यस्य स्वरो यस्य न भीषणः ।
लघुप्रहारदाता च वाजी तस्य न धावति ॥ १८ ॥
सर्वलक्षणसम्पन्नः सर्वदोषविवर्जितः ।
कुलशीलबलोपेतः कथमश्वो न धावति ॥ १९ ॥
गतिरेका प्लुता चान्या चतुराख्या तृतीयका ।
वेगसन्धिस्तुर्थी च धारावेगगतिस्तथा ॥ २० ॥
श्लथरागार्थवेषस्य चञ्चलस्य त्रिकोणतः ।
नित्यमुद्यतदण्डस्य तस्य वाजी न धावति ॥ २१ ॥
धारा तु पञ्चमी प्रोक्ता न शृणोति न पश्यति ।
सर्वकर्मचमो वाजी तस्मात्तां परिवर्जयेत् ॥ २२ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते आरोहणाध्यायः ।

---

## नवमोऽध्यायः ।

### ऋतुचर्य्या ।

कर्मचर्य्यासु नित्यानां शुद्धानां सुनिवर्हितम् ।
धनुरष्टादशे योज्यं वाजिनां मण्डलं क्रमात् ॥ १ ॥

सङ्कोचयेज्जयं तावद् यावत् कार्मुकपञ्चकम्।
तदूर्द्धं मण्डलैर्योज्यो गोमूत्रात्तदनन्तरम्॥ २॥
ऋजुर्वृत्तानुवृत्ता च गोमूत्रा सर्वकर्मसु।
युज्यमानानि दृश्यन्ते प्रायशो हि विचक्षणैः॥ ३॥
शालिहोत्रमुनिप्रोक्ता चर्य्या षोड़श वाजिनाम्।
तासामनुपयोगित्वान्न कृतः संग्रहो मया॥ ४॥
तीक्ष्णस्त्वेकेन मुदितो द्वाभ्यां भद्रस्तु धावति।
त्रिभिर्दण्डैस्तदा मन्दः क्रमात् षष्ठाभिताड़नैः॥ ५॥
तीक्ष्णाश्वभद्रमन्दानां प्रधानो जव उच्यते।
सोऽप्यनेनैव मार्गेण संविभज्यो विजानता॥ ६॥
आवाहिता विनश्यन्ति सर्वकर्मक्षमा हयाः।
कृशा व्याधिपरीताङ्गा जायन्तेऽत्यन्तवाहनात्॥ ७॥
बलं कालो वयो भूमिः कालः सत्वमतः क्रमात्।
कुर्य्यादेकान्तरे योगश्चातियोगो हि दोषवान्॥ ८॥
तच्च लोकप्रसिद्धं हि बोद्धव्यं यत्नतो बुधैः।
हयवाहनवेत्तानो नरेन्द्रैः पूज्यते सदा॥ ९॥
धाविते ये गुणाः सप्तैवक्ष्यमाणान्निबोध तान्।
शालिहोत्रादिशास्त्राणां व्यायामफलसम्भवान्॥ १०॥
स्थिरमांसो भारसहो लघुगात्रः पराक्रमी।
दीप्ताग्निश्च सुशीलश्च व्यायामेनोपजायते॥ ११॥
सत्यार्थी विनयी प्रीतो निर्दोषस्तापवर्जितः।
वेदवित्सादिचित्तज्ञ उक्तो धावति तिष्ठति॥ १२॥
शुभावर्त्तगतिच्छाया बलशीलसमन्वितम्।
गन्धवर्णस्वरोत्कण्ठसारपुण्ड्रविभूषितम्॥ १३॥
एवंविधं समारुह्य देवतांशं हयं नृपः।
जित्वा रिपुकुलं भुङ्क्ते निःशङ्कोऽथ वसुन्धराम्॥ १४॥

जवः श्रेष्ठस्तुरङ्गानामुत्तमाधममध्यमः।
त्रिविधोऽपि तथा भिन्नो जवभेदः स उच्यते॥ १५॥
यवोदरैरष्टसङ्ख्यैरङ्गुलं परिकीर्त्तितम्।
हस्तश्च तैश्चतुर्विंशैः कार्मुकं तैश्चतुर्गुणैः॥ १६॥
अक्ष्णोर्निमिषणैः काष्ठा अष्टलघ्वक्षरं तथा।
मात्रा ज्ञेया प्रमाणैश्च पूर्वप्रोक्ता तपोधनैः॥ १७॥
मात्रा षोड़शकेनाश्वो यो धावति धनुःशतम्।
तमश्वमुत्तमं विद्याद्वायुवेगं महाजवम्॥ १८॥
यथोत्तमजवा वाहास्तथाश्वा मध्यमाधमाः।
चतुरस्त्र्यधिकां वृद्धिं मात्राणां लक्षणं बुधाः॥ १९॥
नभस्यश्वयुजे मासि भाराध्वानं जवं त्यजेत्।
वज्राग्निसदृशं पित्तं श्रमात् कुप्यति वाजिनाम्॥ २०॥
कार्य्येणैव महान् किञ्चिद् युज्यो नभसि कार्त्तिके।
हेमन्ते शिशिरे योगं वसन्ते च यथेच्छया॥ २१॥
श्लेषक्षयात् स्वस्थं गात्रं न ग्रीष्मे वाहयेद्धयम्।
बालो वृद्धः कृशो रोगी दन्तस्नेहो महाबली॥ २२॥
पूर्णातिरिक्तकोष्ठश्च गुर्विणीं न च वाहयेत्।
समां च विपुलाञ्चैव किञ्चित् पांशुसमन्विताम्॥ २३॥
एकान्ते विजने चैव रङ्गभूमिं हयं नयेत्।
सान्द्राञ्चैव सुकठिनां पाषाणोदकगर्त्तिकाम्॥ २४॥
तृणकाष्ठसमायुक्तां रङ्गभूमिं विवर्जयेत्।
विण्मूत्रं कारयेदश्वं क्रोशक्रोशद्वयान्तरे॥ २५॥
वारि दद्याद् यथाकामं घासं मुष्टिश्च चारयेत्।
अन्यथा दोषजातानि वक्ष्याम्येतानि तावतः॥ २६॥
गुरुविस्रब्धगात्रश्च छिन्नश्वासी च कम्पते।
दुर्मना रुद्धविण्मूत्रः सर्वकर्माक्षमो हयः॥ २७॥

गूढ़मेढ्रोन्नतग्रीवो रक्तमेढ्री गुरुक्रमः।
क्षुत्तृष्णाहतशुष्कास्यश्छायां प्राप्य वितिष्ठति॥ २८॥
तर्जनैर्हन्यमानोऽपि विधुनोति शिरः परम्।
मुहुर्विनमते पृष्ठं पदमेकं न गच्छति॥ २९॥
भाराध्वानपरिश्रान्तं शनैः संक्रामयेत् पथि।
नावतारितपर्य्याणं मार्गेऽध्वानममागतम्॥ ३०॥
मुक्तपुच्छाग्रबन्धस्य खलीनं नावतारयेत्।
मर्दयित्वास्य गात्राणि पांशुमध्ये विवर्त्तयेत्॥ ३१॥
स्नानपानावगाहञ्च प्रतिपानं सभोजनम्।
सर्वं क्रमेण कर्त्तव्यमन्यथा दोषसम्भवः॥ ३२॥
रक्तपित्तसमीरोत्थमन्यास्तम्भोदरादयः।
हृद्रोगा वातशूलानि शीतोष्णोदकपानतः॥ ३३॥
रक्तपित्तहरं देयं प्रतिपानं गुड़ौदनम्।
रक्तपित्तसमीरोत्थं दातव्यं शर्करोदकम्॥ ३४॥
जीवनं वातपित्तघ्नं वृष्यं बल्यतमं ततः।
सर्वरोगहरोऽश्वानां मधु जाङ्गलको रसः॥ ३५॥
स्वच्छाक्तञ्च घृतं चीरं वारियुक्तं तुरङ्गमः।
पीत्वा हि निर्हरेद्दोषान् श्रमभाराध्वसंश्रवान्॥ ३६॥
धर्मार्थकामाविजयो यशःश्रीशोभासुखं जातिजनैश्च पूज्या।
रणे निमित्तानि शुभावहानि नृपस्य चैवं विनिवेदयन्ति॥३७॥
प्रत्यूषकाले च दिनं निरीक्ष्य वह्निं द्विजं पूर्णघटं कुमारीम्।
छत्रं ध्वजं चामरदर्पणञ्च रुष्टञ्च दृष्ट्वा तुरगं जयाय॥ ३८॥
श्रुत्वा तु शङ्खाम्बुदवेदवाक्यं पुण्याहमाङ्गल्यशिवस्य गीतम्।
ह्रेषं निमित्तं भवति स्वनेन ध्रुवं जयं तत्र रणे नराणाम्॥३८॥
सन्ध्याङ्घ्रिघातेन महीं निहन्ति ह्रेषन्ति ये स्वामिमुखं निरीक्ष्य।
प्रदक्षिणावर्त्तविकीर्णपुच्छा जयावहास्ते समरे नृपाणाम्॥३९॥

विच्छिन्नदीनस्वरगद्गदा ये अश्रुप्लुता भिन्नपुरीषमूत्राः ।
अनल्पमाना दिनकृन्निरीक्ष्याः पराजयं ते कथयन्ति युद्धे ॥ ४० ॥
अन्यापदं याश्च वदन्ति दीनाः सव्येतरं चक्रविकीर्णपुच्छाः ।
युग्यासनादीन् परिवर्जयन्ते पराजयं ते कथयन्ति भर्त्तुः ॥४१॥
विना निमित्तं रसयन्त्यभीक्ष्णं आकुञ्चिता व्यापितमक्षिकाङ्गाः ।
ध्यायन्ति घातेषु न चोद्विजन्ते भयावहास्ते समरे नृपाणाम्॥४२

शोकं शीलं भयं लज्जामालस्यं चैवमादिषु ।
सुकूलं तं विजानीयादलं पर्य्याणवारणे ॥ ४३ ॥
स्थाणुकण्टकवृक्षैश्च सुधाखदिरकण्टकैः ।
स्वामिघाताय चादत्ते तेषां रूपमिदं शृणु ॥ ४४ ॥
वानरोलूकमार्जारतरक्षुगण्डलोचनाः ।
गतिर्वा असुरैस्तुल्या स्थूलमेढ्रशिरान्विताः ॥ ४५ ॥
लम्बोष्ठकर्णनासाश्च क्षतस्रंहीनाधिकद्विजाः ।
विच्छिन्नप्रोथगण्डा ये भ्रुकुटी चित्रमेहनाः ॥ ४६ ॥
एते दोषास्तथान्येऽपि सुकुलाश्वसमुद्भवाः ।
खलानामिह राजेन्द्र वक्तुं शक्या न मादृशैः ॥ ४७ ॥
लक्ष्यं प्रधानमित्येके चान्ये लक्षणमाश्रिताः ।
लक्ष्यलक्षणमेतेषां तेनेदं दुष्करं विदुः ॥ ४८ ॥
अव्याप्तिरतिसंक्षेपादतिव्याप्तिश्च विस्तरात् ।
मुनीनामेकवाक्यत्वाद् ब्रूयामः स्थितिदुष्कराः ॥ ४९ ॥
सत्ववर्णगतिच्छायास्वरस्थानगतिः कुलम् ।
पुष्पं पुण्ड्रकनामानि दोषं वा जवलक्षणम् ॥ ५० ॥
एवं लक्षणसंयुक्तं दृश्यते शूररक्षणे ।
लक्षणेन विहीना ये निर्दोषाः स्युः प्रधाविताः ॥ ५१ ॥
हयरोहस्य,का चिन्ता लक्षणैः शुभनिन्दितैः ।
येनात्र न कृतोऽस्माभिर्हयलक्षणविस्तरः ॥ ५२ ॥

हयवाहनविज्ञानं कौतुकाहितबुद्धय: ।
अनायासेन गच्छन्ति परं हृष्टा इमे जना: ॥ ५३ ॥
चलासनं कषा रागा: पाणिघातप्रतोदनम् ।
पदप्रघातसंज्ञानि दोषो यैरुपजायते ॥ ५४ ॥
कामात् कोपाद्भयान्मोहाद्दर्पाच्चैव मदाश्रयात् ।
पर्य्याणारोहदोषाच्च दूष्यन्तेऽश्वा निसर्गत: ॥ ५५ ॥
श्रीयुक्तसामन्तनरेन्द्रवन्दितं रणे हयारोहवराभिनन्दितम् ।
धर्मार्थकामादियश:प्रधानमित्थं कृतं वाहनशास्त्रविस्तरम् ॥५६

इति श्रीनकुलकृतेऽश्वचिकित्सिते वाहनाध्यायो नाम
नवमोऽध्याय: ।

## दशमोऽध्याय: ।

### धातुपरीक्षा ।

अथात: संप्रवक्ष्यामि धातूनां लक्षणं परम् ।
येन विज्ञानमात्रेण ज्ञायन्ते रोगसम्भवा: ॥ १ ॥
तत: शुद्धशरीरोत्थरक्तदोषानवाप्नुयात् ।
रक्तदोषात्तदा वाजी प्राप्नोत्येव महामयान् ॥ २ ॥
तस्मात् सर्वप्रयत्नेन रक्तं ज्ञेयं विचक्षणै: ।
आषाढ़समये प्राप्ते शिरामोक्षेण कृत्स्नश: ॥ ३ ॥
तेन संशोध्यते रक्तं वाजिनां दोषसम्भवम् ।
तत: शुद्धशरीरोऽथ पिण्डाद्यैश्च बलीकृत: ॥ ४ ॥
श्रावणे शष्पमासाद्य वज्रवत् सुदृढ़ो भवेत् ।
यदि रक्ताधिको वाजी सस्यमश्नाति कर्हिचित् ॥ ५ ॥
रक्तात् सञ्जायते पित्तं ततो नाशमवाप्नुयात् ।
रक्ताधिकश्चासपुट: स्नेहाद्यै: शस्यमत्ति चेत् ॥ ६ ॥

संप्राप्य श्लेष्ममचिराद्धयो नाशमवाप्नुयात्।
हीनरक्तो यदा शस्यं रूक्षोऽश्नाति तुरङ्गमः॥ ७॥
तदा वायुं परं प्राप्य सद्यो नाशमवाप्नुयात्।
तत्रेदं लक्षणं प्रोक्तं रक्तकोपसमुद्भवम्॥ ८॥
धातूनामपि सर्वेषां ज्ञेयं चिह्नं विचक्षणैः।
पित्तरक्तप्रकोपेण यदा संपीड्यते हयः॥ ९॥
तदा कण्डूतिमासाद्य कषते सततं वपुः।
छायां वाञ्छति यत्नेन विशेषेण जलाश्रयम्॥ १०॥
मुहुर्वाञ्छति पानीयमाहारञ्च विशेषतः।
एवं वातोत्थरक्तेन ज्ञात्वाश्वं पीड़ितं ततः॥ ११॥
शिरामोक्षं विधायैव दद्यात्सकटुकं गुड़म्।
ततः शुद्धिमवाप्नोति नीरोगः संप्रपद्यते॥ १२॥
पित्तासृग्दूषितो वाजी यदि चाश्रूणि मुञ्चति।
नेत्रान्ते पाण्डुरत्वञ्च सद्यो मृत्युमवाप्नुयात्॥ १३॥
नेत्रयोर्लक्षणं प्रोक्तं पित्तरक्तसमुद्भवम्।
श्लेष्मरक्तप्रकोपेण यदा सम्पीड्यते हयः॥ १४॥
अधोवक्त्रो भवेन्नित्यं कासते च मुहुर्मुहुः।
आहारं न च गृह्णाति नोत्साहं कुरुते क्वचित्॥ १५॥
न विन्दति कशाघातं न च पार्ष्णिं न चासनम्।
नासाग्रेण क्षिपेत्तोयं वह्निर्घर्मञ्च वाञ्छति॥ १६॥
तस्यापि शोधयित्वासृग् दद्याच्छुण्ठ्यायुतं गुड़म्।
सर्वं रक्तं ततः शुद्धा निःशेषं समवाप्नुयात्॥ १७॥
वाजिनः श्लेष्मरक्ताभ्यां दूषितस्य सदा भवेत्।
नेत्रान्ते विन्दुकाकारकण्डूस्तस्य तथोदरे॥
तदा मृत्युमवाप्नोति षण्मासाभ्यन्तरे ध्रुवम्॥ १८॥
शुण्ठ्यामृता गोक्षुरकं घनञ्च श्यामा वचा हिङ्गुयुता च यष्टिः।

कफप्रणाशाय विनिर्मितोऽयं पिण्डः प्रसिद्धश्च कफापहश्च॥१९॥
नोचेदश्नाति शुण्ठ्याढ्यं सैन्धवञ्चास्य मार्गतः।
वायुरक्तप्रकोपेण पीड़ितस्तु तुरङ्गमः।
कुक्षिद्वये हयस्तीव्रं मुहुः श्वासं प्रमुञ्चति॥ २०॥
नैकत्र मन्यते स्थातुं क्षिपते च निरर्गलम्।
एवं वातोद्भवं ज्ञात्वा रक्तं देहे हयस्य च॥ २१॥
शोधयित्वाथ सन्दद्यान्महाघृतमनल्पकम्।
ततः शुद्धिमवाप्नोति परां पुष्टिञ्च गच्छति॥ २२॥
उत्साहं कुरुते मार्गे सर्वदोषविवर्जितः।
वातरक्तप्रकोपेण लोचनान्ते हयस्य च॥ २३॥
यदा स्यातां सिते रक्ते काशः कण्डूस्तथानने।
तदा तस्य भवेन्मृत्युर्यदि नाश्नाति चामिषम्॥ २४॥
अश्मकञ्च युतं दध्ना माहिषेण निशागमे।
सन्निपातेऽथ रक्तेन यदा संपीड्यते हयः॥ २५॥
यदा वेपथुमाप्नोति काशते च निरर्गलम्।
निद्रालस्याग्निमन्दत्वं वस्तौ मलनिबन्धनम्॥ २६॥
कर्णयोः पातनञ्चैव वक्त्राल्लालाविमोचनम्।
तत्रापि शोधयेद्रक्तं ततो लङ्घनमर्हति॥ २७॥
यावद्दोषस्य निर्णाशं स्तोकोदककृताशनः।
क्वचिदुष्णं क्वचिच्छीतं क्वचिद्भेषजसंयुतम्॥ २८॥
प्रदेयं युक्तितत्त्वज्ञैर्वारि वार्य्यं न कुत्रचित्।
सपथ्या चामृता चैव कटुका च वचा तथा॥ २९॥
शमयेत् तत्क्षणादेव त्रिधातुकुपितं ज्वरम्।
शिरीषं श्रीफलञ्चैव वेतसञ्चैव वृद्धिभाक्॥ ३०॥
मन्दाग्नित्वं सदोषाणां कुरुते भस्मसाद् द्रुतम्।
मधुकं मधुजालञ्च माधुर्य्यं कुलिकान्वितम्॥ ३१॥

शिरीषं क्षुद्रकं लाक्षां क्वाथयित्वा त्रिभागतः।
यस्यैतत्सन्निपाताय वाजिनः संप्रदीयते ॥ ३२ ॥
तस्य तन्नाशमायाति तमः सूर्य्योदये यथा।
स्वस्थस्यापि हि नेत्रान्ते स्यातां नीले च वाजिनः ॥ ३३ ॥
गन्धश्च सदृशः चोण्या तदा मृत्युर्द्विमासिकः।
नीले पीतेऽथ नेत्रान्ते स्यातां चेद्वाजिनः क्वचित्।
स निर्वाणमवाप्नोति त्रिभिर्मासैरसंशयम् ॥ ३४ ॥
यस्य नेत्रान्तरे रेखा बहुवर्णा प्रजायते।
विशेषात् स्वरभेदः स्यात्तस्यायुः पाञ्चमासिकम् ॥ ३५ ॥
जिह्वायां जायते विन्दुरकस्माद् यस्य वाजिनः।
कृच्छ्रञ्च जीवते मासं स वाजी नात्र संशयः ॥ ३६ ॥
पीतो मासद्वयेनैव सप्तेर्मृत्युं प्रयच्छति।
त्रिभिर्मासैस्तथारक्तश्चतुर्भिश्च विचित्रितः ॥ ३७ ॥
पञ्चभिर्नीलवर्णश्च षड्भिर्वज्रसमाकृतिः।
सप्तभिः पाटलाकारश्चम्पकाभस्तथाष्टभिः ॥ ३८ ॥
नवभिश्च हरिद्राभो दशभिर्जन्तुकोपमः।
एकादशभिर्दूर्वाभो वत्सरेण हिमद्युतिः ॥ ३९ ॥
यस्य श्वासो भवेदुष्णः शरीरं पुलकाङ्कितम्।
जिह्वा हिमकराकारा मासषट्कं स जीवति ॥ ४० ॥
ग्रीवाग्रे पिण्डिका यस्य जायते च तथाधरे।
मूत्रं करोति रक्ताढ्यं मासषट्कं स जीवति ॥ ४१ ॥
वर्णः श्वेतो यदा यस्य नेत्रयोश्च प्रजायते।
दशमासान् समासाद्य पित्तार्त्तो न स जीवति ॥ ४२ ॥
यस्य नीलप्रभे स्यातां नेत्रे वातार्दितस्य तु।
मासत्रयञ्च कृच्छ्रेण यः सप्तिः स न जीवति ॥ ४३ ॥
श्लेष्मयुक्तस्य वा रक्ते यदि स्यातां विलोचने।

वक्रगन्धः सुरातुल्यो दश मासान् स जीवति ॥ ४४ ॥
यस्य नेत्रे हरिद्राभे स्यातां पित्तार्दितस्य च।
तस्यायुः सप्तमासाख्यं मुनिभिः परिकीर्त्तितम् ॥ ४५ ॥
बहुवर्णे घने नेत्रे स्यातां धातुसमागमे।
तस्य सप्तेर्भवेन्मृत्युः सप्तरात्रादसंशयम् ॥ ४६ ॥
यस्यैकं लोचनं नीलं द्वितीयं रक्तसन्निभम्।
दृश्यते स च विज्ञेयः पित्ताढ्यो मासजीवकः ॥ ४७ ॥
यस्य पित्तप्रसक्तस्य काले नीरदवर्त्तिनि।
हयस्य जीवितं तावद्दिनानि दश पञ्च च ॥ ४८ ॥
एवं रक्तविकाराणां ज्ञात्वा धातुं तुरङ्गमे।
ततः प्रतिक्रिया कार्य्या उक्ता या कीर्त्तिता परा ॥ ४९ ॥
भयादपीतपानीयशीतविश्रीयुतस्य च।
आर्त्तोऽपि ताड़ितोऽत्यर्थं तिर्य्यग्विद्धो यदापि वा ॥ ५० ॥
अमाङ्गराच्च बन्धाद्वा गात्रे वा विषमस्थिते।
क्षीणशोणितमांसस्य शिरावेधः प्रशस्यते ॥ ५१ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते धातुपरीक्षाध्यायो नाम दशमोऽध्यायः।

---

## एकादशोऽध्यायः।

### ऋतुचर्य्या।

द्वासप्ततिसहस्राणि नाड़ीनां हि भवन्ति च।
वाजिनामिह सर्वेषां वायुरक्तं व्यवस्थितम् ॥ १ ॥
तासां निर्मोचनार्थाय द्वाराण्यष्टौ वदाम्यहम्।
यैर्याति कुत्सितं रक्तं सर्वदेहसमुद्भवम् ॥ २ ॥

कण्ठे वक्षसि तालौ च नसयोश्च मुखे तथा।
अण्डयोरथ पादेषु पादयोरुभयोरपि ॥ ३ ॥
कालं बलञ्च विज्ञाय वाजिनां भिषगुत्तमः।
शिरामोक्षं प्रकुर्वीत स्थानेष्वेतेषु पण्डितः ॥ ४ ॥
अन्ये सप्तदश प्राहुः शिराद्वाराणि वाजिनः।
विकारयुक्तं यद्रक्तं सुस्वल्पमपि वर्जयेत् ॥ ५ ॥
एवं शरदि यः सम्यक् पुष्टिं नयति वाजिनाम्।
तस्य यद्वाञ्छितं किञ्चिद्यानार्थं तच्च सिध्यति ॥ ६ ॥
ततो हेमन्तमासाद्य निवाते निबधेद्धयम्।
मासोत्थं यवसं दद्यात् पानीयञ्च यथेच्छया ॥ ७ ॥
घृतं वा यदि वा तैलं पाने दद्याद्विचक्षणः।
वाहयेच्च शनैर्नित्यं सर्वदोषप्रशान्तये ॥ ८ ॥
ततः शिशिरमासाद्य दद्यात्तैलं हि वाजिनाम्।
पलाष्टकप्रमाणेन यावद्दिनत्रिसप्तकम् ॥ ९ ॥
यवोत्थं यवसं दद्यादेकविंशत्यहानि च।
यवाभावेऽथ चणकान् दद्यादार्द्रतरान् सदा ॥ १० ॥
तदभावे मसूरांश्च शुष्कार्द्रांस्तैलसंयुतान्।
यवसं चापि तद्देयं नीरोगो जायते हयः ॥ ११ ॥
औषधानाञ्च सर्वेषां क्वाथानां नस्यकर्मणाम्।
तैलानाञ्च घृतानाञ्च यवस्य यवसं परम् ॥ १२ ॥
पर्वतानां यथा मेरुरायुधानाञ्च वज्रकम्।
तथा सर्वोपचाराणां सप्तैः श्रेष्ठतमा यवाः ॥ १३ ॥
देवतानां यथा विष्णुर्ब्रह्मा वेदविदां वरः।
नदीनाञ्च यथा गङ्गा तथा श्रेष्ठा यवा हये ॥ १४ ॥
यथोदितः सहस्रांशुर्निःशेषं तिमिरं जयेत्।
तथा शरीरजान् दोषान् यवाः सप्तैर्हरन्ति च ॥ १५ ॥

उपचारक्रियाः सर्वाः पञ्चर्त्तुजनिता हये।
कृताः स्युर्यवभोज्येन सप्तैस्तस्य कृता नरैः॥ १६॥
यस्य दत्ता यवा भोज्ये शिशिरे समुपस्थिते।
अकृतापि कृता सर्वा पञ्चर्त्तुजनिता हये॥ १७॥
कृताः स्युर्यवभोज्येन सप्तैस्तस्य कृता नरैः।
नीरोगास्तुरगाः सर्वे शालिहोत्रमतं यथा॥ १८॥
पञ्चर्त्तुजनिता वाथ क्रिया न्यस्ता तुरङ्गमे।
अतीतास्ते विजानीयाद् यवभोज्यविवर्जिताः॥ १९॥
एवं रक्तविशुद्धानां कृत्वा यत्नेन वाजिनाम्।
दद्याद्गोमूत्रसंयुक्तां सतैलां च हरीतकीम्॥ २०॥
दिनं त्रिसप्तकं यावत् पलपञ्चप्रमाणतः।
ततः शुद्धिमवाप्नोति निःशेषाद्रुधिरोद्गमात्॥ २१॥
ततो नवतृणाहारं संप्राप्य सुमनोहरम्।
परां पुष्टिमवाप्नोति नीरोगश्च प्रजायते॥ २२॥
न प्रायो वाहयेदश्वं प्रावृट्काले कथञ्चन।
य इच्छेद्वाजिनस्तस्य वाहनं दशमासिकम्॥ २३॥
कूपोदकं सदा शस्तं पानाय जलदागमे।
अभ्यङ्गः कटुतैलेन निर्वातस्थानबन्धनम्॥ २४॥
एकाहां तरितं दद्याल्लवणञ्च विचक्षणः।
पलद्वयप्रमाणेन मुखजापरिशुद्धये॥ २५॥
मुखरोगमवाप्नोति क्षारस्वादविवर्जितः।
वृष्ट्यम्भोभिस्तु सिक्ताङ्गस्तेजसा त्यजते हयः॥ २६॥
अशुद्धोदकजान् प्रामान् प्राप्नोति शतशः परान्।
नवोदकप्रधानेन बलहीनश्च जायते॥ २७॥
तस्मात् सर्वप्रयत्नेन प्रावृट्काल उपस्थिते।
अनेन विधिना प्राज्ञो वाजिनः परिपोषयेत्॥ २८॥

ततः शरदमासाद्य बहुखण्डसमन्वितम् ।
शस्तं चारीदनं सप्तपलाष्टपरिसंख्यया ॥ २९ ॥
दुग्धं वा केवलं रात्रौ क्वथितं संप्रशस्यते ।
तथान्यदपि यत्किञ्चिन्मधुरं संप्रजायते ॥ ३० ॥
पानाय सारसं तोयं यवसं सुमनोहरम् ।
नीलवर्णमकुष्टाश्च घृतं प्राशेन संयुतम् ।
वाहनं च प्रयत्नेन सुस्वल्पमपि वर्जयेत् ॥ ३१ ॥
परीक्षाग्नौ यथा हेम्नः स्नेहस्य च प्रतिक्रिया ।
हयजीवस्य तद्वच्च परीक्षा यवभक्षणे ॥ ३२ ॥
यथा सांयात्रिकः पारं गत्वोच्चैः स्वस्थतां व्रजेत् ।
तद्वत् यवाशनोत्तीर्णाः शुद्धदेहा हयोत्तमाः ॥ ३३ ॥
अल्पेनापि हि छिद्रेण यथा नश्यति नौर्जले ।
स्वल्पेनापि हि दोषेण यवदोषांस्तथैव च ॥ ३४ ॥
एवं ज्ञात्वा विदग्धेन यवा देयाः प्रयत्नतः ।
प्रायक्षीरा विशेषेण शिशिरे समुपस्थिते ॥ ३५ ॥
शुष्का वापि यवा देयाः सर्वकालं च वाजिनाम् ।
प्राणदास्ते ततो ज्ञेयाः सर्वव्याधिविनाशनाः ॥ ३६ ॥
यश्चाश्नाति यवानाशु शुष्कांश्च स्वेच्छया सदा ।
न तस्य जायते रोगः कदाचिच्च यवान्नभाक् ॥ ३७ ॥
न च शूलं न च श्वासो न च प्लीहा न च क्लमः ।
न च रक्तप्रकोपश्च न च वातादिधातवः ॥ ३८ ॥
योग्योऽशनार्थं वाहानां प्रधानो यव ईष्यते ।
यवाभावेऽथ चणका धान्यमन्यतमं परम् ॥ ३९ ॥
यवाभावेऽथवा दद्यान्मुकुष्टांस्तैलसंयुतान् ।
भोजने तुरगेन्द्राणां परां पुष्टिमभीप्सताम् ॥ ४० ॥
मुकुष्टभोजनाद्वाजी पुष्टिं गच्छत्यलौकिकीम् ।

उत्साहं परमं धत्ते स च रोगैर्विमुच्यते ॥ ४१ ॥
अप्राप्तौ च सुकुष्टानां मुद्गा देया मनीषिभिः ।
सतैलास्तेऽपि कुर्वन्ति पुष्टिं सत्वविवर्द्धिनीम् ॥ ४२ ॥
एते पुष्टिगुणाः प्रोक्तास्तृणकाहारजा हये ।
नान्यस्तस्मादभावेन सर्वेषां तान् विनिर्दिशेत् ॥ ४३ ॥
नान्यद्धितं प्रशंसन्ति पञ्चमं वाजिनां बुधाः ।
भक्षणार्थं यतस्तस्य दानोल्लङ्घनमुत्तमम् ॥ ४४ ॥
अन्नाभावे प्रदातव्यं घृतं वा यदि वा पयः ।
शस्यं वा मांसमेवाथ पुष्ट्यर्थं वाजिनां सदा ॥ ४५ ॥
यस्याश्वः शस्यमश्नाति सदा लवणमिश्रितम् ।
किं तस्य शस्यदानेन यथाभूतेन भूपतेः ॥ ४६ ॥
शस्याभावेऽथ यवसं शुष्कं वा यस्य वाजिनः ।
दिवानिशमरण्ये च स्वेच्छया संविभुक्तिकाः ॥ ४७ ॥
तेचापि वाजिनो ज्ञेया यथा शस्यचरास्तथा ।
तथा सर्वप्रयत्नेन मुक्तान् सञ्चारयेद्वने ॥ ४८ ॥
आरोग्यार्थं सुपुष्ट्यर्थमुत्साहार्थं विशेषतः ।
वित्तव्ययस्य रक्षार्थं हरेद्रोगं प्रयत्नतः ॥ ४९ ॥
वसन्तसमये प्राप्ते वाहयेत् सततं हयम् ।
सनिम्बं लवणं दद्यात्ताभ्यां तैलं विशेषतः ॥ ५० ॥
सर्वत्र सम्भवं भोज्यं तैलं वा यदि वा घृतम् ।
न दोषकारणं प्रोक्तं सक्षारं लवमश्नुतः ॥ ५१ ॥
वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।
तस्योत्साहः प्रणश्येत सालस्यं जायते वपुः ॥ ५२ ॥
ततो मन्दाग्निनाविष्टो रोगाभावे प्रजायते ।
तस्मात्सर्वप्रयत्नेन वसन्ते वाहयेद्धयम् ॥ ५३ ॥
ग्रीष्मकाले च संप्राप्ते दूर्वाभोज्यं प्रशस्यते ।

वाजिनामिह सर्वेषां घर्मतापोपशान्तये ॥ ५४ ॥
घृतपानं विशेषेण सुच्छायासु निबन्धनम्।
रक्तस्रावे च गात्रेषु ग्रासं वा घृतसंयुतम् ॥ ५५ ॥
दूर्वाभावे प्रदातव्यं तुरगाय घृतान्वितम्।
कृत्तकाशस्य मध्याग्रं सर्वदोषोपशान्तये ॥ ५६ ॥
एवं स्वस्थमयं सम्यगुपचारं करोति यः।
हयस्य तु ग्रहो नित्यं तस्य वर्द्धन्ति वाजिनः ॥ ५७ ॥
नीरोगाः पुष्टिसंयुक्ताः प्रकृष्टोत्साहसंयुताः।
तर्पिता भूमिपैरश्वा भूमिमार्गक्रियाक्षमाः ॥ ५८ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते ऋतुपर्य्यायाध्यायो नाम एकादशोऽध्यायः।

---

## द्वादशोऽध्यायः।

### नस्यः।

श्वासश्वाससमो नस्यो वातपित्तकफोद्भवः।
नस्यः संनाशयेत्तस्मात्तं नस्यं योजयेद्बुधः ॥ १ ॥
पिप्पली सैन्धवं सारं नागरं च गुडान्वितम्।
कृत्तिकासारमध्याग्रं वाजिनां श्लेष्मनाशनम् ॥ २ ॥
चूलिका लवणं नस्ये सदा रोगविनाशनम्।
सिता चन्दनतोयानि सात्तुकाख्यानि वाजिनाम् ॥ ३ ॥
नस्यकर्माणि युक्तानि नाडीवातप्रशान्तये।
मृदुकैरार्द्रकं सान्द्रं वचाक्षारविमिश्रितम् ॥ ४ ॥
नस्ये दत्तं वातशान्त्यै हयरोगविनाशनम्।
शर्करां मार्चिकं सैरं पटोलं पलसंयुतम् ॥ ५ ॥
नस्ये शरदि सर्वेषां जायते रोगशान्तये।

वचा चोषाणकं कुष्ठं शुण्ठी च कासमर्दिका ॥ ६ ॥
युक्तं शीतोदके स्तोके तेषां नस्येऽपसर्पयेत् ।
गुडूची कौमुदी ताली मिश्रिता कूपवारिणा ॥ ७ ॥
नस्ये दत्ता वराश्वानां शिशिरे सुखदा स्मृता ।
अपामार्गं महानस्यं सर्वरोगविनाशनम् ॥ ८ ॥
केवलं कटुतैलं वा गोमूत्रे पाचितं च यत् ।
मैथुनाद्रिक्तसन्धीनां स्रोतोबलकरं विदुः ॥ ९ ॥
कण्ठरोगे तथा नस्यं गोमूत्रलवणान्वितम् ।
महद्गुणकरं प्रोक्तं सर्वदोषनिवारणम् ॥ १० ॥
अपामार्गस्य मूलेन नस्ये मूत्रं च छागलम् ।
मुखरोगविनाशाय नस्यं मत्स्यवसोद्भवम् ॥ ११ ॥
लशुनं पिप्पलीमूलं गण्डकी नागकेशरम् ।
उक्तं नस्येन रोगघ्नं कटुतैलेन वाजिनाम् ॥ १२ ॥
नस्यं पर्य्युषितैस्तोयैः प्रातर्दत्तं तु केवलैः ।
अश्वानाञ्च नराणाञ्च चात्तुर्थं बलवर्द्धनम् ॥ १३ ॥
पिप्पलीमिश्रतोयेन ससितासलिलेन च ।
नस्यं यच्छति सप्तीनां सर्पिषा यच्छते बलम् ॥ १४ ॥
नस्यं स्निग्धं तथा रूक्षं तिक्तञ्च मधुरं तथा ।
चतुर्धा वाजिशास्त्रज्ञैर्यथावत्परिकीर्त्तितम् ॥ १५ ॥
देयं वाताधिके स्निग्धं रूक्षं तिक्तं कफाधिके ।
मधुरं चैव पित्ताढ्ये तुरङ्गे समयोचितम् ॥ १६ ॥
द्विपञ्चाशत्प्रमाणं वा श्रेष्ठं तन्नस्यमुच्यते ।
पादोनं मध्यमं तत्र षड्विंशत्यां तथाधमम् ॥ १७ ॥
नस्यान्ते वाजिनो रक्तं सदा पुष्टं प्रजायते ।
नस्यदानात् क्षतं तस्य विनाशमुपगच्छति ॥ १८ ॥
दाड़िमं पुष्करं श्रीकं श्वेतदूर्वाङ्कुरास्तथा ।

शीतोदकेन संयुक्तं रक्तं दुष्टं न जायते ॥ १९ ॥
धातकी गोक्षुरं रोध्रं कुसुम्भं सिन्धुवारकम् ।
शीतोदकेन संयुक्तं नस्यं रक्तविनाशनम् ॥ २० ॥
धातकी गण्डकी चैव गोमूत्रं लवणं तथा ।
नस्ये दत्तं कफं हन्ति तमः सूर्य्योदये यथा ॥ २१ ॥
शुण्ठी घृतञ्च दुग्धञ्च रससारं तथैव च ।
वातदोषविनाशाय नस्यमेतत् प्रयोजयेत् ॥ २२ ॥
माक्षिकं शर्करायुक्तं चन्दनं केशराणि च ।
नस्योऽयं वारिणः सद्यः पित्तनाशकरः परः ॥ २३ ॥
गुड़ूची शुण्ठी मुस्ता च तगरं सितसर्षपाः ।
सन्निपाते सपित्तेऽयं नस्यः स्याज्जीवरक्षकः ॥ २४ ॥
अभया पुष्करी धात्री एला लाक्षा शतावरी ।
सन्निपातेऽनिलाधिक्ये नस्योऽयं क्षेमकारकः ॥ २५ ॥
मरिचं पिप्पलीमूलं वचा भारङ्गिकाभया ।
सन्निपाते कफाधिक्ये नस्यं समैः सुखप्रदम् ॥ २६ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते नस्याधिकाराध्यायो नाम द्वादशोऽध्यायः ।

---

## त्रयोदशोऽध्यायः ।

### पिण्डः ।

कटुका च जयन्ती च भ्रामरी सुरसा घनाः ।
पञ्चामृतमयः पिण्डो वाजिनामयमिष्टकृत् ॥ १ ॥
एला शतघ्नी सुरसा काकजङ्घा शतावरी ।
माक्षिकं ससितं पिण्डः पित्तयुक्ते हि वाजिनि ॥ २ ॥

माक्षिकं सैन्धवं मुस्ता गोमूत्रं च हरीतकी ।
समभागेन पिण्डोऽयमुक्तो वह्निप्रदीपकः ॥ ३ ॥
कङ्कोलं केतकी द्राक्षा शर्करा मधुयष्टिका ।
दत्तो घृतयुतः पिण्डः पुष्टिं नयति वाजिनः ॥ ४ ॥
मत्स्यमांसेन संयुक्तं शावचूर्णं घृतप्लुतम् ।
बलहीनस्य वाहस्य पिण्डोऽयं बलवर्द्धनः ॥ ५ ॥
बला मद्यं दधि क्षौद्रं भक्षयंस्तुरगो भवेत् ।
अतिवृद्धोऽपि सूक्ष्मोऽपि यथा षट्सप्तवार्षिकः ॥ ६ ॥
मेथिका धातकी काली सारणी बीजपूरकः ।
पिण्डो दत्तो वराश्वानां तेजोवृद्धिकरः स्मृतः ॥ ७ ॥
कटुका मद्यसंमिश्रा धात्री लोध्रगुडान्विता ।
दत्त्वा पिण्डविधानेन वाजिनां सुखवृद्धिदा ॥ ८ ॥
त्रिफला कटुका मुस्ता विडङ्गानि च चित्रकम् ।
सदालस्यसमेतानां वाजिनां पिण्ड आर्त्तिहृत् ॥ ९ ॥
वचा विदलिताः स्निग्धाः सघृताः क्षारभाविताः ।
पिण्डैर्दत्ताः प्रकुर्वन्ति वाजिनां व्याधिनाशनम् ॥ १० ॥
सैन्धवं नागरं श्यामा गुडूची सितसर्षपाः ।
अम्लवेतसमश्वानां पिण्डोऽयं शूलनाशनः ॥ ११ ॥
पिप्पली पिप्पलीमूलं कटुका सहदेविका ।
दूर्वापल्लवसंमिश्रः पिण्डोऽयं प्लीहनाशकः ॥ १२ ॥
केशरं श्रीफलं तालं माक्षिकं गिरिकर्णिका ।
पिण्डोऽयं श्लथने शस्तो वाजिनां सुगतिप्रदः ॥ १३ ॥
वचालोध्रं सकर्पूरं गुहा श्यामा गुडं मधु ।
समांशकेन पिण्डोऽयं करोति लघिमा हये ॥ १४ ॥
मद्यं मरिचसंयुक्तं लशुनं नागकेशरम् ।
द्विगुणं मेषमांसञ्च पिण्डो दत्तो जयेच्छ्रमम् ॥ १५ ॥

जम्बीरं फलिनीपत्रं त्वचा किञ्जल्कमेव च।
जातशोणितवाहानां पिण्डोऽयं रक्तनाशनः॥ १६॥
तमालं पुष्करं लोध्रमपामार्गं सतिन्दुकम्।
पयसा पिण्डमेतद्धि वातकोपप्रणाशनम्॥ १७॥
आरनालं प्रपिष्टा च पथ्या नेपालिका फलम्।
पिण्डे दत्त्वे हये दध्ना निहन्त्याशु विजृम्भितम्॥ १८॥
मुद्गपूगं वचामिश्रं तथा सर्ज्जरसान्वितम्।
पिण्डे दत्ते निहन्त्याशु क्रमिसङ्घं व्रणोद्भवम्॥ १९॥
स्नुहीक्षीरं सकर्पूरं कूपोदकविभावितम्।
पिण्डोऽयं हन्ति मध्यस्थान् रोगान् सर्वान् क्रमिव्रजान्॥२०
सिता दुग्धं सकर्पूरमेलया पत्रसंयुतम्।
अग्निदाहार्त्तियुक्तानां पिण्डोऽयं वाजिनां स्मृतः॥ २१॥
ग्रीष्मासह्यप्रतप्तानामारनालं परिप्लुतम्।
सक्तुदिच्छन्ति पिण्डेन वाजिनां सुखकारकम्॥ २२॥
वृष्टिवातार्दितानाञ्च वाजिनां पुष्टिकृन्मतः।
पिण्डः कृतः सतैलेन लशुनेन पलेन च॥ २३॥
महाघृतं सकर्पूरं शर्करा दुग्धमेव च।
कफनाशकरः प्रोक्तः पिण्डोऽयं सुखदः स्मृतः॥ २४॥
रोचना च वरी धात्री तथा स्याद्बीजपूरकः।
गुल्मं प्रशमयन्त्याशु वाजिनां हृदयोद्भवम्॥ २५॥
सहदेवी वचा कुष्ठं वरुणा चेन्द्रवारुणी।
अतिश्वासं हरन्त्येते वाजिनां मधुना सह॥ २६॥
उदुम्बरफलं मांसं सौकरं माहिषं दधि।
हयस्य चातिवृद्धस्य करोति परमं सुखम्॥ २७॥
विभीतकं प्रियङ्गुश्च सर्जिका लवणं यथा।
कासदोषोपशमनः पिण्डः स्मृतः सुखप्रदः॥ २८॥

तक्रं कर्पूरचूर्णञ्च शिवं सौवर्चलान्वितम्।
पिण्डोऽयं वस्तिसंरोधे वाजिनः संप्रकीर्त्तितः॥ २९॥
सौवर्चलं हरिद्रा च पिप्पली चेन्द्रवारुणी।
मूत्रकृच्छ्रे परीप्सन्ति पिण्डोऽयं तुरगस्य हि॥ ३०॥
पिण्डीर सक्तवः चौद्रं भल्लातकफलं वृषम्।
रक्तमूत्रे तु पिण्डोऽयं वाजिनां रक्तनाशनः॥ ३१॥
अभया यष्टिका श्यामा देवदारु सगन्धकम्।
पुरीषे रक्तसंमिश्रे सदा शंसति वाजिनः॥ ३२॥
पटोलं धातकी मुस्ता यष्टिका गिरिकर्णिका।
रक्ताधिके कृतः पिण्डः करोति रुधिरच्चयम्॥ ३३॥
हरिद्राद्वयसंयुक्तं गन्धकं कटुतैलकम्।
पिण्डकं श्रुतियुक्तानां सदाश्वानां प्रशस्यते॥ ३४॥
अतसीपत्रकं निम्बं न्यग्रोधकलिकान्वितम्।
अतीसारे सुशंसन्ति पिण्डोऽयं वाजिनः शुभः॥ ३५॥
व्रणैः कृमिभिरत्यर्थं यदा वाजी प्रपीड्यते।
तदा पिण्डः प्रदातव्यः स्थूलैरण्डदलैरलम्॥ ३६॥
कर्पूरशर्करालोध्रं माचिकं त्रिफलान्वितम्।
तुरङ्गाण्याः प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः॥ ३७॥
पत्रकं सिन्धुवारञ्च भ्रामरं चक्रकिंशुकम्।
मांसवृद्धौ प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः॥ ३८॥
सैन्धवं चूलिकाचारं विडङ्गानि मधूनि च।
शस्त्रपीड़ाभिभूतस्य पिण्डोऽश्वस्य प्रशस्यते॥ ३९॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते पिण्डाध्यायो नाम
त्रयोदशोऽध्यायः।

---

# चतुर्दशोऽध्यायः ।

## घृतविधानम् ।

शिलाजतु विशाला च पद्मकं नागकेशरम् ।
लाक्षा पद्मकमूलञ्च निम्बद्वयसमन्वितम् ॥ १ ॥
घृतं माक्षिकसंयुक्तं सप्तविंशतिकं विदुः ।
अष्टांशं तु समादाय सुरामांसघृतस्य च ॥ २ ॥
पलमात्राणि सर्वाणि पूर्वद्रव्याणि निःक्षिपेत् ।
तेषां दानेन तत्सर्पिर्जायते सर्ववाजिनाम् ॥ ३ ॥
बलपुष्टिकरं नित्यं सर्ववातविनाशनम् ।
सर्वरोगप्रशमनं कायाग्नेश्च प्रदीपनम् ॥ ४ ॥
ओजस्करं व्यथानाशं प्लीहशोषप्रणाशनम् ।
धातकी केशरं कुष्ठं कुसुम्भं कुङ्कुमं नलम् ॥ ५ ॥
दाड़िमं सितरोध्रञ्च पलमात्राणि निःक्षिपेत् ।
घृतञ्च पाचयेत् पानादभिघातान्वितो हयः ॥ ६ ॥
जायते सर्वशुद्धाङ्गो महाप्राणैर्न संशयः ।
आरनालं वचा कुष्ठं पिङ्गला सिक्थकं घृतम् ॥ ७ ॥
एतैः पक्वं घृतं सम्यक् पित्तव्याधिविनाशनम् ।
हरिद्राद्वयसंयुक्तं गन्धकं तु मनःशिला ॥ ८ ॥
क्वाथयेन्नवनीतेन त्रिगुणेन घृतेन च ।
अभ्यङ्गेनाथ पानेन सप्तरात्रेण वाजिनः ॥ ९ ॥
कण्डूतिर्निःक्षयं याति तथोदरभवा रुजः ।
माक्षिकं निम्बपत्राणि नखं गुग्गुल एव च ॥ १० ॥
भृङ्गराजो विशाला च पाठा चैव पुनर्नवा ।

बिल्वमारुष्ककं रोध्रं सैन्धवं तगरं तथा ॥ ११ ॥
एतैः पक्वा घृतं वाजी संप्राप्यार्त्तैर्विमुच्यते ॥ १२ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते घृताध्यायश्चतुर्दशः।

---

## पञ्चदशोऽध्यायः।

### क्वाथः।

पूर्वाणि समभागानि क्वाथयेत् कूपवारिणा।
ततोऽष्टांशं समादाय तोयस्य क्वथितस्य च ॥ १ ॥
एतत् सिद्धार्थकं नाम ह्युत्कृष्टं सर्ववाजिनाम्।
कायाग्निं वर्द्धयत्याशु नीरोगत्वं प्रयच्छति ॥ २ ॥
मुस्ता मधुकपत्राणि केशरं लवणं रुहा।
शताह्वा शाल्मली धात्री त्रपुसं फलिनी तथा ॥ ३ ॥
क्वाथयित्वा जलं कौपं दत्तैस्तुल्यैर्विचक्षणः।
त्रिभागमेवमादाय ततो दद्याद्धयस्य च ॥ ४ ॥
प्रकरोति सदा नाशं पित्तस्यागन्तुकस्य च।
एकविंशद्दिनं यावच्छालिहोत्रमतं यथा ॥ ५ ॥
शुण्ठी हरीतकी पाठा ब्राह्मी मुस्ता शिफालिका।
हरिद्राद्वयसंयुक्ता हरितालं मनःशिला ॥ ६ ॥
सिद्धस्त्रिभागशेषोऽयं क्वाथो हन्याच्चिरात्रिकम्।
सन्निपातमशेषेण पलिकः पलमात्रकः ॥ ७ ॥
मधुकं केशरं पत्रं भल्लातकविभीतकम्।
शङ्खपुष्पं रुहा सारं समभागेन मिश्रितम् ॥ ८ ॥
कासार्त्तस्य समुद्दिष्टः क्वाथोऽयं त्रिफलात्मकः।
उत्साहवर्द्धकः सद्यस्तथा कायाग्निदीपकः ॥ ९ ॥

कुमारी शाल्मली पाचा मञ्जिष्ठा चेन्द्रवारुणी।
काकोली समभागेन क्राथयेत् समभागतः॥ १०॥
पलद्वयप्रमाणेन ततः पीतेन वाजिना।
मोहयेच्छूलजं दोषं मूत्रदोषञ्च तत्क्षणात्॥ ११॥
यवानी माक्षिकं कामं सौवर्च्चलयुताभया।
क्राथयेदष्टमांशेन तत्पानाज्जायते हयः॥ १२॥
प्रदीप्ताग्निस्तु तेजस्वी सर्वरोगाद्विमुच्यते।
स शीघ्रमार्गगामी च स्निग्धो रोगविवर्जितः॥ १३॥
शेफालिका दुग्धपीले वेणुका सिन्धुवारिका।
एतैः क्राथः कृतः सम्यक् कृमिनाशकरः परः॥ १४॥
मातुलुङ्गस्य वीजानि चन्दनं सितसर्षपाः।
उशीरं पुष्करं ब्राह्मी लक्ष्मणा च पुनर्नवा॥ १५॥
क्राथोऽयं शुण्ठिचूर्णेन धावितक्लेशनाशनः।
प्रकरोति तुरङ्गाणां सर्वदैव सुखं तथा॥ १६॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते क्राथाध्यायो नाम पञ्चदशोऽध्यायः।

---

## षोड़शोऽध्यायः।

### विषम्।

वारुणी माक्षिकी गौरी श्रीताली वीजपूरकम्।
कृमिक्लेदविनाशाय क्राथो नित्यं रुजाहरः॥ १॥
अश्वगन्धा घृतं क्षौद्रं विषदग्धस्य वाजिनः।
विषनाशं करोत्येव सर्वगात्रेषु तत्क्षणात्॥ २॥
सामान्येन प्रदिष्टोऽयमगदो विषनाशनः।
पृथक् पृथग्विभागेन कर्त्तव्यं साम्प्रतं परम्॥ ३॥

त्रिविधं कीर्त्तितं चैव कृत्रिमञ्च ततःपरम्।
त्रिविधं कीर्त्तितं प्राज्ञैर्विषज्ञानविचक्षणैः॥ ४ ॥
स्थावरं कन्दजं प्रोक्तं जङ्गमं सत्वसंस्थितम्।
कृत्रिमं योगजं प्रोक्तं त्रिविधं विषमुच्यते॥ ५ ॥
यदा स्थिरं समश्नन्ति कदाचित्तुरगोत्तमाः।
तदा कार्य्यं विधानज्ञैरगदस्य प्रयोजनम्॥ ६ ॥
केशरं पद्मनालञ्च सौपर्णी वदरीफलम्।
तक्रमिश्रं हये दत्तं सर्वथा विषनाशनम्॥ ७ ॥
सौपर्णी सिन्धुवारञ्च नागवल्ली जटा तथा।
विषार्त्तं प्राप्य संमिश्रं दुग्धे स्यादायुधी हयः॥ ८ ॥
अश्वगन्धा रुहा एला घृतमिश्रा प्रयोजिता।
विषनाशं नयत्याशु जङ्गमं हयगात्रतः॥ ९ ॥
मूलं चन्दनवृक्षस्य माषचूर्णपरिप्लुतम्।
जङ्गमस्य विषस्याशु प्रकरोति च संक्षयम्॥ १० ॥
तक्रं केशरसंयुक्तं विषं सद्यो नवाभ्रकम्।
हयस्य जङ्गमं नाशं विषं नयति तत्क्षणात्॥ ११ ॥
सौपर्णी विषकङ्कोली पिष्टा मद्येन भाविता।
जङ्गमं गात्रतः कृत्स्नं विषं नयति तत्क्षणात्॥ १२
एला कङ्कोलिकामूलं सौपर्णी घृतमिश्रितम्।
विषनाशं करोत्याशु नस्यदानेन वाजिनाम्॥ १३ ॥
कौसुम्भं केशरं लाक्षा माक्षिका नाकुली तथा।
कृत्रिमस्य विषस्याशु प्रकरोति च संक्षयम्॥ १४ ॥
चम्पकं मालतीमूलमुन्मत्तकरसं तथा।
अश्वानां नाशयत्याशु विषं जङ्गममाश्रितम्॥ १५ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते विषयोगाध्यायो
नाम षोड़शोऽध्यायः।

# अष्टादशोऽध्यायः ।

## अश्वशालाविधिः ।

नृपवेश्म वामभागे शुभदिने तु कारयेद्धयागारम् ।
पूज्यश्रियं प्रयत्नादुच्चैःश्रवसं प्रतिष्ठाप्य ॥ १ ॥
सुशुभे भूमिविभागे पूर्वोत्तरजलप्लवविधानात् ।
तस्मिन् शालां च्छिन्नां दशहस्तसमुच्छ्रितां दृढां कुर्य्यात्॥२॥
खादनकोष्ठकमस्मिन् हस्तद्वितयं समुच्छ्रितं कुर्य्यात् ।
संस्थाप्य वृषभगावौ सप्ताहं वाजिशालायाम् ॥ ३ ॥
अत ऊर्द्ध्वन्तु हुताग्निः प्रवेशयेद्वाजिनो यथायोग्यम् ।
कुशलैस्तरुणैर्दक्षैरनुकूलैः स्थानपालैश्च ॥ ४ ॥
कृतमङ्गलसंस्कारा बन्धव्यास्तेऽत्र चोत्तराभिमुखाः ।
नात्यायता न शिथिलाः स्थाने वा दक्षिणाभिमुखम् ॥ ५ ॥
वैद्यानां तुरगाय समीपं गृहं कारयेत् पूर्वम् ।
कार्य्यासिकेन सूत्रेण माक्षिकाणां निवारणम् ॥ ६ ॥
गन्धैर्माल्यैर्धूपैः स्थानानि विभूषयेदलङ्कारैः ।
सविशेषं त्वश्वपोतौ हुताग्निं पूरयेद्विद्वान् ॥ ७ ॥
स्वच्छिद्रं नातियवसं यथा पश्यन्ति वाजिनः ।
स्थानं चैव पृथक् प्राप्तं प्रयत्नं रोगिणां न वै ॥ ८ ॥
कोष्ठी कुष्ठी ज्वरी यक्ष्मी परस्परं दूषयति चारैः ।
तिथिवारे केशांश्च खुरांश्च प्रघ्नन्ति दीर्घान् ॥ ९ ॥
अश्वस्याङ्गे प्रलिपेद्धरिद्रया वरिष्ठया मङ्गल्या च ।
सुपवित्रान् दोषघ्नैर्विभूषयेदलङ्कारैः ॥ १० ॥

इति श्रीनकुलकृतेऽश्वचिकित्सितेऽश्वशालाविधि-
रष्टादशोऽध्यायः ।

---

समाप्तश्चायं ग्रन्थः ।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

PANDIT JIBANANDA VIDYASAGARA B. A.

Superintendent Free SanskritCollege, Calcutta.